ॐ

॥ श्रीः ॥

# पञ्चस्तवी ।

कश्मीरस्थश्रीप्रतापहिन्दूकालेज-
इति प्रथितपाठशालासंस्कृतमुख्याध्यापकेन
कलेतुपाह्वेन नाथरामशास्त्रिणा
संस्कृता शोधिता ।

सैव

श्रीकृष्णदासात्मज-गङ्गाविष्णोः
"लक्ष्मीवेंकटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशिता च ।

शकाब्दाः १८२८, ख्रिस्ताब्दाः १९०६.

कल्याण-मुंबई.

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri



॥ श्रीः ॥

# पञ्चस्तवी ।

कश्मीरस्थश्रीप्रतापहिन्दूकालेज-
इति प्रथितपाठशालासंस्कृतमुख्याध्यापकेन
कलेत्युपाह्वेन नाथरामशास्त्रिणा
संस्कृता शोधिता ।

सैव

श्रीकृष्णदासात्मज-गङ्गाविष्णोः
" लक्ष्मीवेंकटेश्वर " मुद्रणालये
मुद्रयित्वा प्रकाशिता च ।

शकाब्दाः १८२८, ख्रिस्ताब्दाः १९०६.

कल्याण-मुंबई.

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri



# पंचस्तवी ।

## लघुस्तवः ।

ॐ ऐं+न्द्रस्येव शरासनस्य दधती मध्ये[2]ललाटं प्रभां ।
शौ[3]क्लीं कान्तिमनु[4]ष्णगोरिव शिरस्यातन्वती सर्वतः ॥
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहःस्थिता ।
छिन्द्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥ १ ॥

या मात्रा त्रपुसीलतातनुलसत्तन्तूत्थितिस्पर्धिनी ।
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ॥
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमा ।
ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥ २ ॥

---

+ मंत्रोद्धारादिविधिरत्र देशिकमुखादेवावगंतव्यः ।

भूतानि पदानि यस्य. । २ अव्ययीभावः । ३ शुक्लरूपाम् । ४ सोमस्य । ५ त्रिपु १५ गलदलक्तकद्रवबिन्दुदंतुरामिव ... । ६ ललाटादिभिः स्थानैर्वर्णरूपैश्च । प्रस... तश्च ये तंतवस्तेषां प्रथमारम्भ- १८ मृगाक्ष्यः स्त्रियः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri



# पंचस्तवी ।

## लघुस्तवः ।

१ ॐ ऐं+ इन्द्रस्येव शरासनस्य दधती मध्ये[2]ललाटं प्रभां ।
शौक्लीं[3] कान्तिमनुष्णगो[4]रिव शिरस्यातन्वती सर्वतः ॥
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहःस्थिता ।
छिन्द्यान्नः सहसा पदै[5]स्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥ १ ॥
या मात्रा त्रपुसीलतातनुलसत्तन्तूत्थितिस्पर्धिनी ।
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ॥
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमा ।
ज्ञात्वेत्थं[6] न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥ २ ॥

---

+ मंत्रोद्धारादिविधिरत्र देशिकमुखादेवावगंतव्यः ।
...नः । २ अव्ययीभावः । ३ शुक्लरूपाम् । ४ सोमस्य । ५ त्रिभु...
...भिः । ६ कण्ठताल्वादिभिः स्थानैर्वर्णरूपैश्च ।
...प्रथमारम्भ-
...प्रसन्नतश्च ये ततवरतेषां...

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

दृष्ट्वा संभ्रमकारि[1] वस्तु सहसा ऐ ऐ इति व्याहृतं ।
येनाकूतवशादपीह[2] वरदे बिन्दुं विनाप्यक्षरम् ॥
तस्यापि ध्रुवमेव देवि तरसा जाते तवानुग्रहे ।
वाचः सूक्तिसुधारसद्रवमुचो[3] निर्यान्ति वक्त्राम्बुजात् ॥ ३ ॥
यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं[4] ।
तत्सारस्वतमित्यवैति[5] विरलः कश्चिद्बुधश्चेद्भुवि ॥
आख्यानं[6] प्रतिपर्व[7] सत्यतपसो यत्कीर्तयन्तो द्विजाः ।
प्रारम्भे प्रणवास्पदप्रणयितां[8] नीत्वोच्चरन्ति स्फुटम् ॥ ४ ॥
यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधै- ।
स्तार्तीयिकमहं[10] नमामि मनसा त्वद्बीजमिन्दुप्रभम् ॥
अस्त्यौर्वोऽपि सरस्वतीमनुगतो जाड्या[11] ग्निविच्छित्तये ।
गोशब्दो गिरि[12] वर्तते स नियतं योगं विना सिद्धिदः ॥ ५ ॥
एकैकं तव देवि बीजमनघं सव्यञ्जनाव्यञ्जनं ।
कूटस्थं[13] यदि वा पृथक्क्रमगतं यद्वा स्थितं व्युत्क्रमात्[14] ॥

१ त्रासविधायि सर्पादिकम् । २ भयाद्यभिप्रायात् । ३ सारोद्धारः अमृतमाधुर्य-
मिवोद्गिरन्त्य इत्यर्थः । ४ कलातीतम् । ५ सरस्वतीदेव[illegible] । ६ या पश्यति न सा
ब्रूते या ब्रूते सा न पश्यति । अहो व्याध स्वकार्यार्थी कं[illegible]सि [illegible] पर्वा-
न्तर्गतमितिहासम् । ७ पूर्णिमादौ । ८ एतदाख्यस्य [illegible]
[illegible]धितां नीत्वा । १० तृतीयम् । ११ [illegible]
[illegible]काक्षरसंयुक्तम् । १४ विपरीतक्रमात्

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यं यं काममपेक्ष्य येन विधिना केनापि वा चिन्तितं ।
जप्तं वा सफलीकरोति सहसा तं तं समस्तं नृणाम् ।६॥
वामे पुस्तकधारिणीमभयदां[1] साक्षस्रजं[2] दक्षिणे ।
भक्तेभ्यो वरदान[3]पेशलकरां[4] कर्पूरकुन्दोज्ज्वलाम्[5] ॥
उज्जृम्भा[6]म्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीं ।
ये त्वामम्ब न शीलयन्ति[7] मनसा तेषां कवित्वं कुतः ॥ ७ ॥
ये त्वां पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभां ।
सिञ्चन्तीममृत[8]द्रवैरिव[9] शिरो ध्यायन्ति मूर्ध्नि स्थिताम् ॥
अश्रान्तं[10] विकट[11]स्फुटाक्षरपदा निर्याति वक्त्राम्बुजा- ।
त्तेषां भारति ! भारती सुर[12]सरित्कल्लोललोलोर्मिवत् ॥ ८ ॥
ये सिन्दूरपराग[13]पुञ्जपिहितां[14] त्वत्तेजसाद्यामिमा- ।
मुर्वीं चापि विलीन[15]यावकरसप्रस्तारमग्नामिव ॥
पश्यन्ति क्षणमप्यनन्य[16]मनसस्तेषामनङ्ग[17]ज्वर- ।
क्लान्तास्त्रस्तकुरङ्गशावकदृशो[18] वश्या भवन्ति स्फुटम् ॥ ९ ॥

---

१ द्वितीयवामकरे । २ जपमालाधारिणीम् । ३ द्वितीयदक्षिणकरे । ४ ललितहस्ताम् । ५ धवलाम् । ६ विकासितपद्मपत्रवत् शुक्लवर्णे ये नेत्रे तयोर्या विशेषरम्या स्नेहयुक्ता च प्रभा तयालोकते तच्छीलेति तथोक्ताम् । ७ आराधयन्ति । ८ सितवर्णामित्यर्थः । ९ रसैः । १० निरन्तरम् । ११ उदाराणि च प्रकटार्थानि अक्षराणि येष्वेवंभूतानि पदानि यस्याः । १२ अखिन्नप्रसरत्वादित्यर्थः । १३ धूलिः । १४ व्याप्ताम् । १५ गलदलक्तकद्रवबिन्दुदंतुरामिव । १६ एकाग्रचित्ताः । १७ कन्दर्पार्तिपीडिताः । १८ मृगाक्ष्यः स्त्रियः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

[1]उद्यत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चीस्रजं ।
ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थितिम् ॥
तेषां वेश्मसु विभ्रमादहरहः [2]स्फारीभवन्त्यश्चिरं ।
माद्यत्कुञ्जरकर्णताललतरलाः [3]स्थैर्यं भजन्ते श्रियः ॥ १० ॥
आर्भट्या [4] शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं [5] ।
बन्धूकप्रसवारुणाम्बरधरां [6] प्रेतासनाध्यासिनीम् ॥
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं ।
मध्ये निम्नवलित्रयांकिततनुं त्वद्रूपसंवित्तये ॥ ११ ॥
जातोऽप्यल्पपरिच्छदे[7] क्षितिभुजां सामान्यमात्रे[8] कुले ।
निःशेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः ॥
यद्विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभव- ।
देवि ! त्वच्चरणाम्बुजप्रणतिजः सोयं प्रसादोदयः ॥ १२ ॥
चण्डि त्वच्चरणाम्बुजार्चनविधौ बिल्वीदलोल्लुण्ठन- ।
त्रुट्यत्कण्टककोटिभिः[9] परिचयं[10] येषां न जग्मुः कराः ॥
ते दण्डांकुशचक्रचापकुलिशश्रीवत्समत्स्यांकितै- ।
र्जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः ॥ १३ ॥

१ देदीप्यमानम् । २ उत्तरोत्तरं वर्धमानाः । ३ अनवस्थायिन्योऽपि चिरावस्थितिं तत्र लभन्त इत्यर्थः । ४ या तु प्रौढार्थसंदर्भवृत्तिरारभटी तु सेति लक्षितया वीररसाश्रयोद्धतया वृत्त्या । ५ कपालमालाधारिणीम् । ६ जपापुष्पम् । ७ अल्पपरिवारे । ८ अनुत्कृष्टे । ९ बिल्वपत्रत्रोटनलग्नकण्टकाग्रैः । १० संपर्कम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

विप्राः क्षोणिभुजो[1] विशस्तदितरे[2] क्षीराज्यमध्वासवै- ।
स्त्वां देवि ! त्रिपुरे ! परापरमयीं संतर्प्य पूजाविधौ ॥
यां यां प्रार्थयते मनः[3] स्थिरधियां[4] तेषां ते[5] एव ध्रुवं ।
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥ १४ ॥
शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे ।
त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति स्फुटम् ॥
लीयन्ते खलु यत्र कल्पविरमे[6] ब्रह्मादयस्तेऽप्यमी ।
सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयसे ॥ १५ ॥
देवानां त्रितयं त्रयी[7] हुतभुजां शक्तित्रयं[8] त्रिस्वरा[9]- ।
स्त्रैलोक्यं त्रिपदी[10] त्रिपुष्करमथो[11] त्रिब्रह्म[12] वर्णास्त्रयः[13] ॥
यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं[14] ।
तत्सर्वं [15]त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥ १६ ॥
लक्ष्मीं राजकुले जयां रणभुवि क्षेमंकरीमध्वनि ।
क्रव्यादद्विपसर्पभाजि शबरीं कान्तारदुर्गे[16] गिरौ ॥

---

१ क्षत्रियाः । २ शूद्राः । ३ कर्तृपदमेतत् । ४ त्वदेकाग्रवताम् । ५ ब्राह्मणादयः । ६ कल्पान्ते । ७ दाक्षिणाग्निगार्हपत्याहवनीयरूपा । ८ इच्छादि ब्राह्म्यादि वा । ९ उदात्तादयः । १० गायत्र्याः पदत्रयम् । हृदादि वा । ११ गंगायमुनासरस्वतीति जलत्रयी । १२ वेदत्रयी । १३ अकारोकारमकाररूपाः । १४ धर्मार्थकामात्मकम् । १५ जाग्रदाद्यवस्थात्रयव्याप्तिमती चिद्रूपा शक्तिः । १६ दुर्गमं वर्त्म ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भूतप्रेतपिशाचजम्बुकभये स्मृत्वा महाभैरवीं ।
[1]व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोय[2]प्लवे ॥ १७ ॥
माया कुण्डलिनी क्रिया मधुमती काली कला[3] मालिनी ।
मातङ्गी विजया जया भगवती[4] देवी शिवा शाम्भवी ॥
शक्तिः शंकरवल्लभा त्रिनयना वाग्वादिनी भैरवी[5] ।
ह्रींकारी त्रिपुरा परा[6]परमयी माता[7] कुमारी[8]त्यसि ॥ १८ ॥
आईपल्लवि[9]तैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरैः ।
काद्यैः क्षान्तगतैः स्वरादिभिरथ क्षान्तैश्च तैः सस्वरैः ॥
नामानि त्रिपुरे ! भवन्ति खलु यान्यत्य[10]न्तगुह्यानि ते ।
तेभ्यो भैरवपत्नि ! विंशतिसहस्रेभ्यः परेभ्यो नमः ॥ १९ ॥
बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं ।
भारत्या त्रिपुरेत्यनन्य[11]मनसा यत्राद्य[12]वृत्ते स्फुटम् ॥
एकद्वित्रिपदक्रमेण कथितस्त्वत्पादसंख्याक्षरै- ।
र्मन्त्रोद्धारविधिर्विशेष[13]सहितः सत्संप्र[14]दायान्वितः ॥ २० ॥

---

१ चित्तभ्रमे । २ समुद्रादितरणे । ३ किंचित्कर्तृत्वरूपिणी । ४ ऐश्वर्यादिषट्कवती । ५ भरणाद्रवणाद्वमनाद्वा । ६ सूक्ष्मस्थूलमयी । ७ उत्पत्तिकारिणी । ८ भेदभूमिमारिका ९ सम्पुटितैः । १० मन्दधियामगम्यानि । ११ तद्गतमनसः । १२ प्रथमे श्लोके १३ सव्यंजनत्वादिविशेषसहितः । १४ अविच्छिन्नाचार्योपदेशेनानुगतः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सा[1]वद्यं निरवद्यमस्तु यदि वा किंवानया चिन्तया ।
नूनं स्तोत्रमिदं पठिष्यति नरो यस्यास्ति भक्तिस्त्वयि ॥
संचिन्त्यापि लघुत्वमात्मनि दृढं संजायमानं हठा- ।
त्त्वद्भक्त्या मुखरीकृतेन[2] रचितं यस्मान्मयापि ध्रुवम् ॥ २१ ॥

आनन्दसुन्दरपुरन्दरमुक्तमाल्यं ।
मौलौ हठेन [3]निहितं महिषासुरस्य ॥
पादाम्बुजं भवतु मे विजयाय म[4]ञ्जु ।
म[5]ञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ २२ ॥

इति श्रीपञ्चस्तव्यां लघुस्तवः ।

---

१ सदोषम् । २ उत्साहितेन । ३ स्थापितम् । ४ सुन्दरम् । ५ नूपुरशब्दमनोहरम् ।



CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

# चर्चास्तवः ।

ॐ सौन्दर्यविभ्रम[1]भुवो भुवनाधिपत्य- ।
सम्पत्तिकल्पतरवस्त्रिपुरे जयन्ति ॥
एते कवित्वकुसुदप्रकर[2]ावबोधं[3]- ।
पूर्णेन्दवस्त्वयि जगज्जननि प्रणामाः ॥ १ ॥

देवि ! स्तुतिव्यतिकरे[4] कृतबुद्धयस्[5]ते ।
वाचस्पतिप्रभृतयोऽपि जडीभवन्ति[6] ॥
तस्मान्निसर्गजडिमा कतमोहमत्र ।
स्तोत्रं तव त्रिपुरतापनपत्नि कर्तुम् ॥ २ ॥

मातस्तथापि भवतीं भवतीव्रताप- ।
विच्छित्तये[7] स्तुतिमहार्णवकर्णधारः[8] ॥
स्तोतुं भवानि ! स भवच्चरणारविन्द- ।
भक्तिग्रहः[9] किमपि मां मुखरीकरोति[10] ॥ ३ ॥

सूते[11] जगन्ति भवती[12] भवती[13] बिभर्ति[14] ।
जागर्ति[15] तत्क्षयकृते भवती[16] भवानि ! ॥

१ विलासोत्पत्तिहेतवः । २ षण्डं समूह इत्यर्थः । ३ विकासः । ४ संपर्के । ५ बुद्धिकौशलयुक्ताः । ६ स्वन्महिम्नोऽगणनीयत्वात् । ७ नाशाय । ८ तारकः । ९ निरतिशयानुरागः । १० अबद्धमुखं करोति । ११ सृजति । १२ ब्राह्मीरूपा । १३ वैष्णवीरूपा । १४ पुष्णाति । १५ सततोद्युक्ता भवति । १६ रौद्रीरूपा ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मोहं[1] भिनत्ति भवन्ती[2] भवती[3] रुणद्धि[4] ।
लीलायितं[5] जयति चित्रमिदं भवत्याः ॥ ४ ॥

यस्मिन्मनागपि नवाम्बुजपत्रगौरि ! ।
गौरि ! प्रसादमधुरां दृशमादधासि ॥
तस्मिन्निरन्तरमनङ्गशरप्रकीर्ण- ।
सीमन्तिनीनयनसंततयः पतन्ति ॥ ५ ॥

पृथ्वीभुजोऽप्युदयनप्रवरस्य तस्य ।
विद्याधरप्रणतिचुम्बितपादपीठः ॥
यच्चक्रवर्तिपदवीप्रणयः[7] स एष ।
त्वत्पादपंकजरजःकणजः प्रसादः ॥ ६ ॥

कल्पद्रुमप्रसवकल्पितचित्रपूजा- ।
मुद्दीपित[8]प्रियतमामदरक्तगीतिम् ॥
नित्यं भवानि ! भवतीमुपवीणयन्ति[9] ।
विद्याधराः कनक[10]शैलगुहागृहेषु ॥ ७ ॥

---

१ अख्यातिम् । २ ईश्वररूपा । ३ सदाशिवरूपा । ४ स्वरूपं पिधत्ते । ५ लीलैवेपेक्ष्यर्थः । ६ संमोहनादिभिर्विक्षिप्तीकृता याः स्त्रियस्तासां दृष्टयः । ७ चक्रवर्तित्वप्राप्तिः । ८ उद्दीपिता द्योतिताऽतिप्रिया मदेन रक्ता च गीतिर्यस्यास्तां तथोक्ताम् । ९ वीणयोपगायन्ति । १० सुमेरुः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

लक्ष्मीवशीकरणकर्मणि कामिनीना- ।
माकर्षणव्यतिकरेषु च सिद्धमन्त्रः ॥
नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो ।
देवि ! त्वदंघ्रिजनितो जयति प्रसादः ॥ ८ ॥

देवि ! त्वदंघ्रिनखरत्नभुवो मयूखाः ।
प्रत्यग्रमौक्तिकरुचो मुदमुद्वहन्ति ॥
सेवानतिव्यतिकरे सुरसुन्दरीणां ।
सीमन्तसीम्नि कुसुमस्तबकायितं यैः ॥ ९ ॥

मूर्ध्नि स्फुरत्तुहिनदीधितिदीप्तिदीप्तं ।
मध्ये ललाटममरायुधरश्मिचित्रम् ॥
हृच्चक्रचुम्बि हुतभुक्कणिकानुरूपं ।
ज्योतिर्यदेतदिदमम्ब ! तव स्वरूपम् ॥ १० ॥

रूपं तव स्फुरितचन्द्रमरीचिगौर- ।
मालोकते शिरसि वागधिदेवतं यः ॥

---

१ वशीकरणसंयोगेषु । २ गाढमोहान्धकारनाशकः । ३ नूतनम् । ४ आनन्दम् ५ सेवायां प्रणामकरणे । ६ केशरचनामर्यादायाम् । ७ पुष्पस्तबकत्वेनाचरितम् ८ चन्द्रवर्णम् । ९ अव्ययीभावः । १० नानावर्णम् । ११ हृदयस्थितम् । १२ अग्निवर्णम्

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

निःसीमसूक्तिरचनामृतनिर्भरस्य ।
तस्य प्रसादमधुराः प्रसरन्ति वाचः ॥ ११ ॥

सिन्दूरपांसुपटलच्छुरितामिव द्यां ।
त्वत्तेजसा जतुरसस्नपितामिवोर्वीम् ॥

यः पश्यति क्षणमपि त्रिपुरे विहाय ।
व्रीडां मृडानि ! सुदृशस्तमनुद्रवन्ति ॥ १२ ॥

मातर्मुहूर्तमपि यः स्मरति स्वरूपं ।
लाक्षारसप्रसरतन्तुनिभं भवत्याः ॥

ध्यायन्त्यनन्यमनसस्तमनङ्गतप्ताः ।
प्रद्युम्नसीम्नि सुभगत्वगुणं तरुण्यः ॥ १३ ॥

योऽयं चकास्ति गगनार्णवरत्नमिन्दु- ।
र्योऽयं सुरासुरगुरुः पुरुषः पुराणः ॥

यद्वामममर्धमिदमन्धकसूदनस्य ।
देवि ! त्वमेव तदिति प्रतिपादयन्ति ॥ १४ ॥

इच्छानुरूपमनुरूपगुणप्रकर्षं ।
संकर्षणि त्वमनुसृत्य यदा बिभर्षि ॥

---

१ निरवधि यत् शोभनोक्तिरचनारूपममृतं तस्य निर्झरः प्रवाहः प्रसरो अविच्छिन्नत्वा- तस्य । २ प्रसादगुणललिताः । ३ रञ्जिताम् । ४ लज्जाम् । ५ सौभाग्ययुक्तम् । [illegible]यणः । ७ शिवस्य । ८ अंगीकुर्वन्ति । ९ सदृशम् । १० हे कालाग्निरुद्रशक्ते ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

जायेत स त्रिभुवनैकगुरुस्तदानीं ।
देवः शिवोऽपि भुवनत्रयसूत्रधारः[1] ॥ १५ ॥
रुद्राणि[2] विद्रुममयीं प्रतिमामिव त्वां ।
ये चिन्तयन्त्यरुणकान्तिमनन्यरूपाम् ॥
तानेत्य पक्ष्मलदृशः प्रसभं[3] भजन्ते ।
कण्ठावसक्त[4]मृदुबाहुलतास्तरुण्यः ॥ १६ ॥
त्वद्रूपमुल्लसित[5]दाडिमपुष्परक्त- ।
मुद्भावयेन्[6]मदनदैवतमक्षरं यः ॥
तं रूपहीनमपि मन्मथनिर्विशेषं[7]- ।
मालोकयन्त्युरुनितम्बभरास्तरुण्यः ॥ १७ ॥
ध्यातासि हैमवति[8] येन हिमांशुरश्मि[9]- ।
मालाऽमलद्युतिरकल्मषमानसेन[10] ॥
तस्याऽविलम्बमनवद्य[11]मनन्त[12]कल्प- ।
मल्पैर्दिनैः सृजसि सुन्दरि वाग्विलासम्[13] ॥ १८ ॥
आधार[14]मारुतनिरोधवशेन येषां ।
सिन्दूररञ्जितसरोज[15]गुणानुकारि ॥

---

१ नाटकाचार्यः । २ हे रुद्रशक्ते । ३ हठात् । ४ कंठे आलिङ्गनार्थं स्थापित[illegible]
५ विकासितम् । ६ ध्यायेत् । ७ कामसदृशमित्यर्थः । ८ पार्वति । ९ शुक्ल[illegible]
१० शुद्धान्तःकरणेन । ११ निर्दोषम् । १२ प्रभूततरम् । १३ वाङ्माधुर्यम् । १४ [illegible]
धारप्राणशक्तिनिरोधतः । १५ पद्मतंतुसदृशम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तीव्रं हृदि स्फुरति देवि ! वपुस्त्वदीयं ।
ध्यायन्ति तानिह समी[1]हितसिद्धसाध्याः ॥ १९ ॥

त्वामैन्दवी[2]मिव कलामनुभालदेश- ।
मुद्भासिताम्बरतलामवलोकयन्तः ॥

सद्यो भवानि ! सुधियः कवयो भवन्ति ।
त्वं भा[3]वनाहितधियां कुलका[4]मधेनुः ॥ २० ॥

त्वां व्यापिनीति सुमना इति कुण्डलीति ।
त्वां कामिनीति कमलेति कलावतीति ॥

त्वां मालिनीति ललितेत्यपराजितेति ।
देवि ! स्तुवन्ति विजयेति जयेत्युमेति ॥ २१ ॥

ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति ।
रूपं तवाम्ब ! नवया[5]वकपंकपिंगम् ॥

तेषां सदैव कुसुमायुधबाणभिन्न- ।
वक्षःस्थला मृगदृशो वशगा भवन्ति ॥ २२ ॥

उत्तमहेमरुचिरे त्रिपुरे ! पुनीहि ।
चेतश्चिरन्तनमघौघवनं लुनीहि ॥

---

१ सिद्धाभिलाषिताः साध्याख्या देवाः । २ चान्द्रीम् । ३ ध्यानस्थितबुद्धीनाम् ।
४ सर्वप्रदेत्यर्थः । ५ लाक्षारसः ।



CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

कारागृहे निगडबन्धनपीडितस्य ।
त्वत्संस्मृतौ झटिति मे निगडास्त्रुटन्ति ॥ २३ ॥

शर्वाणि ! सर्वजनवन्दितपादपद्मे ! ।
पद्मच्छदच्छविविडम्बितनेत्रलक्ष्मि ! ॥
निष्पापमूर्तिजनमानसराजहंसि ! ।
हंसि त्वमापदमनेकविधां जनस्य ॥ २४ ॥

त्वत्पादपंकजरजःप्रणिपातपूतैः ।
पुण्यैरनल्पमतिभिः कृतिभिः कवीन्द्रैः ॥
क्षीरक्षपाकरदुकूलहिमावदाता ।
कैरप्यवापि भुवनत्रितयेऽपि कीर्तिः ॥ २५ ॥

त्वद्रूपैकनिरूपणप्रणयिता बन्धोदृशोस्त्वद्गुण- ।
ग्रामाकर्णनरागिता श्रवणयोस्त्वत्संस्मृतिश्चेतसि ॥
त्वत्पादार्चनचातुरी करयुगे त्वत्कीर्तनं वाचि मे ।
कुत्रापि त्वदुपासनव्यसनिता मे देवि ! मा शाम्यतु ॥ २६ ॥

---

१ श्रृंखला । २ पद्मपत्रशोभयाऽनुकृतनेत्रकान्ते । ३ मनः सरश्च । ४ अपाकरोषि । ५ शुक्लवर्णा । ६ अनिर्वचनीयमहिमशालिभिः । ७ प्राप्ता । ८ निश्चयकरणे सस्नेहता । ९ समूहः । १० चातुर्यम् । ११ तत्परता राग इत्यर्थः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

उद्दाम[1]कामपरमार्थसरोजषण्ड- ।
चण्डद्युतिद्युतिमुपासित[2]षट्प्रकाराम् ॥
मोहद्विपेन्द्रकदन[3]ोद्यतबोध[4]सिंह- ।
लीला[5]गुहां भगवतीं त्रिपुरां नमामि ॥ २७ ॥

गणेशबटु[6]कस्तुता रतिसहाय[7]कामान्विता ।
स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता ॥
अनंगकुसुमा[8]दिभिः परिवृता च[9] सिद्धैस्त्रिभिः ।
कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥ २८ ॥

यः स्तोत्रमेतदनु[10]वासरमीश्वरायाः ।
श्रेयस्करं पठति वा यदि वा शृणोति ॥
तस्येप्सितं फलति राजभिरीड्यतेऽसौ ।
जायेत स प्रियतमो हरिणेक्षणानाम् ॥ २९ ॥

ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मि- ।
स्कन्दद्विपाननहुताशनवन्दितायै ॥

---

१ अत्यन्ताभिलषणीयपरमार्थभूतमूलाधारादिषट्चक्रकमलवृन्दविकासे सूर्यदीप्तिम् । २ अङ्गीकृतषट्चक्रादिविशेषाम्। षट्चक्रप्रकारत उपासितां वा । ३ विनाशः। ४ ज्ञानम् । ५ क्रीडावासस्थितिम् । ६ मायया बटुभूतो वामनावतारः को ब्रह्मा । ७ रतिप्रीत्यादिभिः स्वशक्तिभिः सहितैरेकोनपंचाशन्मिथुनरूपकामकामदादिभिरन्विता । ८ अष्टभिर्गुरुतरयोगिनीभिः । ९ दिव्यौघसिद्धौघमानवौघरूपैः । १० प्रतिदिनम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वागीश्वरि ! त्रिभुवनेश्वरि ! विश्वमात-।
रन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥ ३० ॥

इति श्रीपञ्चस्तव्यां चर्चास्तवो द्वितीयः ॥

---



CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

# घटस्तवः ।

देवि ! त्र्यम्बकपत्नि ! पार्वति ! सति ! त्रैलोक्यमातः ! शिवे ! ।
शर्वाणि ! त्रिपुरे ! मृडानि ! वरदे ! रुद्राणि ! कात्यायनि ! ॥
भीमे ! भैरवि ! चण्डि ! शर्वरि ! कले ! कालक्षये ! शूलिनि ! ।
त्वत्पादप्रणताननन्य[1]मनसः पर्याकुलान्पाहि नः ॥ १ ॥

उन्मत्ता इव सग्रहा[2] इव विषव्यासक्त[3]मूर्च्छा इव ।
प्राप्तप्रौढमदा इवातिविरहग्रस्ता इवार्ता इव ॥
ये ध्यायन्ति हि शैलराजतनयां धन्यास्त एकाग्रत- ।
स्त्यक्तोपाधिविवृद्धरागमनसो ध्यायन्ति वामभ्रुवः ॥ २ ॥

देवि ! त्वां सकृदेव[4] यः प्रणमति क्षोणीभृत[5]स्तं नम- ।
न्त्याजन्म स्फुरदंघ्रिपीठविलुठत्[6]कोटीरकोटिच्छटाः ॥
यस्त्वामर्चति सोऽर्च्यते सुरगणैर्यः स्तौति स स्तूयते ।
यस्त्वां ध्यायति तं स्मरार्ति[7]विधुरा ध्यायन्ति वामभ्रुवः[8] ॥ ३ ॥

ध्यायन्ति ये क्षणमपि त्रिपुरे ! हृदि त्वां ।
लावण्ययौवनधनैरपि विप्रयुक्ताः[9] ॥

१ त्वदेकाग्रमनसः । २ भूताद्याविष्टा इव । ३ उत्पन्नमोहाः। ४ एकवारमेव । ५ राजानः । ६ लग्नमुकुटाग्रप्रान्ताः । ७ कामपीडाविह्वलाः । ८ सुन्दर्यः । ९ विरहिताः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ते विस्फुरन्ति[1] ललितायतलोचनानां ।
चित्तैक[2]भित्तिलिखितप्रतिमाः पुमांसः ॥ ४ ॥
एतं किं नु दृशा पिबाम्युत विशाम्यस्याङ्गमङ्गैर्निजैः ।
किं वाऽमुं निगलाम्यलेन सहसा किं चैकतामाश्रये ॥
तस्येत्थं विवशो[3] विकल्प[4]घटनाकूलेन योषिज्जनः ।
किं तद्यन्न करोति देवि ! हृदये यस्य त्वमावतंसे[5] ॥ ५ ॥
विश्वव्यापिनि यद्वदीश्वर इति स्थाणावनन्याश्रयः ।
शब्दः शक्तिरिति त्रिलोकजननि ! त्वय्येव तथ्यस्थितिः[6] ॥
इत्थं सत्यपि शक्नुवन्ति यदिमाः क्षुद्रा रुजो बाधितुं ।
त्वद्भक्तानपि न क्षिणोषि च रुषा तद्देवि ! चित्रं महत् ॥ ६ ॥
इन्दोर्मध्यगतां मृगाङ्कसदृशच्छायां मनोहारिणीं ।
पाण्डुत्फुल्लसरोरुहासनगतां स्निग्धप्रदीपच्छविम् ॥
वर्षन्तीममृतं भवानि ! भवतीं ध्यायन्ति ये देहिन- ।
स्ते निर्मुक्तरुजो भवन्ति विपदः प्रोज्झन्ति तान्दूरतः ॥ ७ ॥
पूर्णेन्दोः शकलैरिवातिबहलैः पीयूषपूरैरिव ।
क्षीराब्धेः लहरीभरैरिव सुधापङ्कस्य पिण्डैरिव ॥

१ रमन्त इत्यर्थः । २ चित्तरूपे चित्राश्रये लिखितमूर्तयः । अनुक्षणं विलासिनीभिर्ध्याता इत्यर्थः। ३ पराधीनः।४ कथं कथं तेन सह रमे इति संकल्पविशेषाभिप्रायेण । ५ पुनः पुनः स्फुरासि । ६ सत्यप्रतिष्ठः । ७ ता रुजः। ८ सतैलः । ९ अमृतप्रवाहैः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति ये श्रद्धया ।
चित्तान्तर्निहतार्तितापविपदस्ते सम्पदं बिभ्रति ॥ ८ ॥

ये संस्मरन्ति तरलां सहसोल्ल[1]सन्तीं ।
त्वां ग्र[2]न्थिपञ्चकमिदं तरुणार्कशोणाम् ॥
रागार्णवे बहलरागिणि मज्ज[3]यन्तीं ।
कृत्स्नं जगद्दध[4]ति चेतसि तान्मृगाक्ष्यः ॥ ९ ॥

लाक्षारसस्नपितपंकजतंतुतन्वी- ।
मन्तः स्मरत्यनुदिनं भवतीं भवानि ! ॥
यस्तं स्मरप्रतिममप्र[5]तिमस्वरूपा ।
नेत्रोत्पलैर्मृगदृशो भृशमर्चयन्ति ॥ १० ॥

स्तुमस्त्वां वाचमव्य[6]क्तां हिमकुन्देन्दुरोचिषम् ॥
कदम्बमालां बिभ्राणामापादतललम्बिनीम् ॥ ११ ॥

मूर्ध्नीन्दोः सितपंकजासनगतां प्रालेयपाण्डुत्विषं ।
वर्षन्तीममृतं सरोरुहभुवो वक्त्रे[7]ऽपि रंध्रे[8]ऽपि च ॥

---

१ मूलाधारादुद्यन्तीम् । २ स्वाधिष्ठानादिचक्रपंचकम् । अविद्यास्मितारागद्वेषाभिनिवेशाख्यं क्लेशपंचकं वा । ३ तन्मयीकुर्वन्तीम् । ४ धारयन्ति । ५ अत्युत्तमस्वरूपाः । ६ परारूपाम् । ७ मूलाधारेऽपि । ८ ब्रह्मरन्ध्रेऽपि ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अच्छिन्ना[1] च मनोहरा[2] च ललिता[3] चातिप्रसन्नापि[4] च । ‡
त्वामेव स्मरतां स्मरारिदयिते ! वाक्सर्वतो वल्गति[5] ॥ १२ ॥
ददातीष्टान्भोगान् क्षपयति रिपून् हन्ति विपदो ।
दहत्याधीन्[6]व्याधीन् शमयति सुखानि प्रतनुते ॥
हठादन्तर्दुःखं दलयति पिनष्टीष्टविरहं ।
सकृद् ध्याता देवी किमिव निरवद्यं न कुरुते ॥ १३ ॥
यस्त्वां ध्यायति वेत्ति विन्दति जपत्यालोकते चिन्तय- ।
त्यन्वेति[7] प्रतिपद्यते[8] कलयति[9] स्तौत्याश्रयत्य[10]र्चति ॥
यश्च त्र्यम्बकवल्लभे ! तव गुणानाकर्णयत्यादरा- ।
त्तस्य श्रीर्न गृहादपैति[11] विजयस्तस्याग्रतो धावति ॥ १४ ॥
किं किं दुःखं दनुजदलिनि ! क्षीयते न स्मृतायां ।
का का कीर्तिः कुलकमलिनि[12] ख्याप्यते[13] न स्तुतायाम् ॥
का का सिद्धिः सुरवरनुते प्राप्यते नार्चितायां ।
कं कं योगं त्वयि न चिनुते[14] चित्तमालम्बितायाम्[15] ॥ १५ ॥

---

१ ध्वनिगर्भत्वेनानर्गला । २ निर्दोषत्वेन । ३ सालंकारत्वेन । ४ प्रसादादिगुणयुक्तत्वेन च । ५ अनवच्छिन्नत्वेन प्रसरति । ६ मानसीर्व्यथाः । ७ सेवकवदनुगच्छति । ८ तांस्तान्नियमानङ्गीकरोति । ९ विचारयति । १० शरण्यत्वेन । ११ अपगच्छति । १२ [illegible] । १३ विश्रूयते । १४ अधिगच्छति । १५ प्रापितायाम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ये देवि ! [1]दुर्धरकृतान्तमुखान्तरस्था ।
 ये कालि ! कालघनपाशनितान्तबद्धाः ॥
ये चण्डि ! [2]चण्डगुरुकल्मषसिन्धुमग्ना- ।
 स्तान्पासि मोचयसि तारयसि स्मृतैव ॥ १६ ॥
लक्ष्मीवशीकरणचूर्णसहोदराणि [3] ।
 त्वत्पादपंकजरजांसि चिरं जयन्ति ॥
यानि प्रणाममिलितानि नृणां ललाटे ।
 [4]लुम्पन्ति दैवलिखितानि [5]दुरक्षराणि ॥ १७ ॥
रे[6] मूढाः किमयं वृथैव तपसा देहः परिक्लिश्यते ।
यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्ती[7]क्रियंते गृहाः ॥
भक्तिश्चेदविनाशिनी भगवतीपादद्वयी सेव्यता- ।
[8]मुन्निद्राम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ॥ १८ ॥
याचे न कंचन न कंचन वञ्चयामि ।
 सेवे न कंचन निरस्तसमस्तदैन्यः ॥
[9]श्लक्ष्णं [10]वसे मधुरमाद्मि भजे वरस्त्रीं ।
 देवी हृदि स्फुरति मे कुल[11]कामधेनुः ॥ १९ ॥

---

१ दुःसहः । २ दुर्धर्षदुरन्तपापसागरब्रुडिताः । ३ सदृशानि । ४ परिमार्जयन्ति । ५ दौर्भाग्यसूचकानि अक्षराणि । ६ नीचसंबोधनम् । ७ शून्यीक्रियन्ते । ८ उत्फुल्लम् । ९ कोमलम् । १० परिदधामि । ११ सुरभिवदखिलकामदा ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शब्दब्रह्ममयि स्वच्छे देवि त्रिपुरसुन्दरि ॥
यथाशक्ति जपं पूजां गृहाण परमेश्वरि ॥ २० ॥
नन्दंतु साधकाः सर्वे विनश्यन्तु विदूषकाः ॥
अवस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥ २१ ॥
दर्शनात्पापशमनी जपान्मृत्युविनाशिनी ॥
पूजिता दुःखदौर्भाग्यहरा त्रिपुरसुन्दरी ॥ २२ ॥
नमामि यामिनीनाथलेखालंकृतकुन्तलाम् ॥
भवानीं भवसंतापनिर्वापणसुधानदीम् ॥ २३ ॥
मंत्रहीनं क्रियाहीनं विधिहीनं च यद्गतम् ॥
त्वया तत्क्षम्यतां देवि कृपया परमेश्वरि ॥ २४ ॥

इति श्रीपञ्चस्तव्यां घटस्तवस्तृतीयः समाप्तः ।



---

१ अनाहतध्वनिमयि । २ निन्दकाः । ३ चन्द्रलेखाशोभितालकाम् । ४ संसारसंतापशान्तौ अमृतनदीम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

# अम्बास्तवः ।

ॐ यामामनन्ति[1] मुनयः प्रकृतिं[2] पुराणीं ।
विद्येति यां श्रुतिरहस्यविदो वदन्ति ॥
तामर्ध[3]पल्लवितशंकररूपमुद्रां ।
देवीमनन्यशरणः शरणं प्रपद्ये[4] ॥ १ ॥
अम्ब स्तवेषु तव तावद्[5]कर्तृकाणि[*] ।
कुण्ठीभवन्ति वचसामपि गुम्फनानि[6] ॥
डिम्भस्य[7] मे स्तुतिरसावसमञ्जसापि[8] ।
वात्सल्यनिघ्न[9]हृदयां भवतीं धिनोति[10] ॥ २ ॥
व्योमेति बिन्दुरिति[11] नाद[12] इतीन्दुलेखा ।
रूपेति वाग्भव[13]तनूरिति मातृकेति[14] ॥
निःष्यन्दमान[15]सुखबोधसुधास्वरूपा ।
विद्योतसे मनसि भाग्यवतां जनानाम् ॥ ३ ॥

---

१ प्रतिपादयन्ति । २ जगद्योनिं । ३ अर्धे प्रकटिता शंकररूपस्याकृतिर्यया । ४ व्रजामि । ५ साकल्येन । ६ रचनाविशेषाः । ७ बालस्य । ८ अनुचितापि । ९ अधीनम् । १० प्रीणयति । ११ ज्ञानं । १२ विमर्शः । १३ वाग्बीजरूपा । १४ अकारादिक्षकारांता । १५ स्रवदानन्दज्ञानामृतरूपा ।

* शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारका इति वचनान्नास्ति कर्ता येषां तानि वैदिकानि इत्यर्थः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

आविर्भवत्पुलकसंततिभिः शरीरै- ।
[2]र्निष्यन्दमानसलिलैर्नयनैश्च नित्यम् ॥
वाग्भिश्च गद्गदपदाभिरुपासते ये ।
पादौ तवाम्ब भुवनेषु त एव धन्याः ॥ ४ ॥
वक्त्रं यदुद्यतमभिष्टुतये[3] भवत्या- ।
स्तुभ्यं नमो यदपि देवि शिरः करोति ॥
चेतश्च यत्त्वयि परायणमम्ब तानि ।
कस्यापि कैरपि भवन्ति तपोविशेषैः ॥ ५ ॥
मूलाल[4]वालकुहरादुदिता भवानि ।
निर्भिद्य षट्सरसिजानि तडिल्लतेव ॥
भूयोऽपि तत्र विशसि ध्रुवमंडलेन्दु- ।
निःष्यन्दमानपरमामृततोयरूपा ॥ ६ ॥
दग्धं यदा मदनमेकमनेकधा ते ।
मुग्धः कटाक्षविधिरङ्कुरयांचकार ॥
धत्ते तदाप्रभृति देवि ललाटनेत्रं ।
सत्यं ह्रियेव मुकुलीकृतमिन्दुमौलिः ॥ ७ ॥

१ रोमाञ्चः । २ उपलक्षिता । ३ उद्यमयुक्तम् । उपरिकृतमित्यर्थः । ४ मूलाधार-रंध्रात् । ५ अवरोहे । ६ अक्षीणमंडलब्रह्मरंध्रवर्तिन इन्दोः सकाशात् । ७ सुन्दरः । ८ जनयामास । ९ निमीलितम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अज्ञातसंभवमनाकलितान्ववायं[1] ।
भिक्षुं कपालिनमवाससमद्वितीयम् ॥
पूर्वं करग्रहण[2]मङ्गलतो भवत्याः ।
शम्भुं क एव बुबुधे गिरिराजकन्ये ! ॥ ८ ॥

चर्माम्बरं च शवभस्मविलेपनं च ।
भिक्षाटनं च नटनं च परेतभूमौ[3] ॥
वेतालसंहतिपरिग्रहता[4] च शम्भोः ।
शोभां बिभर्ति गिरिजे तव साहचर्यात् ॥ ९ ॥

कल्पोपसंहरण[5]केलिषु पण्डितानि ।
चण्डानि खण्डपरशोरपि ताण्डवानि ॥
आलोकनेन तव कोमलितानि मात- ।
र्लास्यात्मना परिणमन्ति[6] जगद्विभूत्यै ॥ १० ॥

जन्तोरपश्चिमतनोः[7] सति कर्मसाम्ये ।
निश्शेष[8]पाशपटलच्छिदुरा निमेषात् ॥
कल्याणि ! देशिक[9]कटाक्षसमाश्रयेण ।
कारुण्यतो भवसि शाम्भववेददीक्षा ॥ ११ ॥

---

१ अज्ञातकुलम् । २ विवाहात् । ३ श्मशाने । ४ परिवारत्वम् । ५ कल्पान्तक्रीडासु । ६ रूपान्तरमापादयंति । ७ अग्रे जन्माभाववतः । ८ कलादिपाशसमूहच्छेत्री । ९ गुरुवरः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मुक्ताविभूषणवती नवविद्रुमाभा ।
यच्चेतसि स्फुरसि तारकितेव सन्ध्या ॥
एकः स एव भुवनत्रयसुन्दरीणां ।
कन्दर्पतां व्रजति पञ्चशरीं विनापि ॥ १२ ॥
ये भावयन्त्यमृतवाहिभिरंशुजालै-[1] ।
राप्याय्यमानभुवनाममृतेश्वरीं त्वाम् ॥
ते लङ्घयन्ति ननु मातरलङ्घनीयां ।
ब्रह्मादिभिः सुरवरैरपि कालकक्षाम्[2] ॥ १३ ॥
यः स्फाटिकाक्षगुणपुस्तककुण्डिकाढ्यां ।
व्याख्यासमुद्यतकरां शरदिन्दुशुभ्राम् ॥
पद्मासनां च हृदये भवतीमुपास्ते ।
मातः स विश्वकवितार्किकचक्रवर्ती ॥ १४ ॥
बर्हावतंस[3]युतबर्बरकेशपाशां ।
गुञ्जावली[4]कृतघनस्तनहारशोभाम् ॥
श्यामां प्रवाल[5]वदनां सुकुमारहस्तां[6] ।
त्वामेव नौमि शबरीं शबरस्य जायाम् ॥ १५ ॥

---

१ करणमंडलानिःसृतैश्चिन्मरीचिभिः । २ मर्यादाम् । अकालकलिता भवन्तीत्यर्थः । ३ मयूरापिच्छम् । ४ अरण्यजैः फलविशेषैः । ५ विद्रुमवत् । ६ कोमलकराम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अर्धेन किं नवलताललितेन[1] मुग्धे ।
क्रीतं विभोः परुषमर्धमिदं[2] त्वयेति ॥
आलीजनस्य[3] परिहासवचांसि मन्ये ।
मन्दस्मितेन तव देवि जडीभवन्ति ॥ १६ ॥

ब्रह्माण्डबुद्बुद[4]कदम्बकसंकुलो[5]ऽयं ।
मायोदधिर्विविधदुःखतरङ्गमालः ॥
आश्चर्यमम्ब झटिति प्रलयं प्रयाति ।
त्वद्ध्यानसंततिमहावडवामुखाग्नौ ॥ १७ ॥

दाक्षायणीति कुटिलेति[6] गुहारणीति[7] ।
कात्यायनीति कमलेति कलावतीति ॥
एका सती भगवती परमार्थतोऽपि ।
संदृश्यसे बहुविधा ननु नर्तकीव ॥ १८ ॥

आनन्दलक्षणमनाहत[8]नाम्नि देशे ।
नादात्मना[9] परिणतं तव रूपमीशे ॥
प्रत्यङ्मुखेन[10] मनसा परिचीयमानं[11] ।
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥ १९ ॥

---

१ कोमलेन । २ कठिनम् । ३ सखी । ४ जलबिन्दुविकारः । ५ पूर्णः । ६ कुण्डलिनीरूपतया । ७ चिद्दीप्तिसंदीपिनीत्वात् । ८ हृच्चक्रे । ९ शब्दरूपेण । १० अंतर्मुखेन । ११ अभ्यस्यमानम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं ।
त्वं चेतनासि पुरुषे पवने बलं त्वम् ॥
त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा ।
निःसारमेतदखिलं त्वं[1]दृते यदि स्यात् ॥ २० ॥

ज्योतीं[2]षि यद्दिवि चरन्ति यदन्तरिक्षं ।
सूते पयांसि यदहिर्धरणीं च धत्ते ॥
यद्वाति वायुरनलो यदुदर्चिरास्ते ।
तत्सर्वमम्ब तव केवलमाज्ञयैव ॥ २१ ॥

सङ्कोचमिच्छसि यदा गिरिजे तदानीं ।
वाक्तर्कयोस्त्वमसि भूमिरनाम[3]रूपा ॥
यद्वा विकासमुपयासि यदा तदानीं ।
त्वन्नामरूपगणनाः सुकरीभवन्ति ॥ २२ ॥

भोगाय देवि भवतीं कृतिनः प्रणम्य ।
भ्रूकिंकरी*कृतसरोजगृहासहस्राः ॥
चिन्तामणिप्रच[4]यकल्पितकेलिशैले ।
कल्पद्रुमोपवन एव चिरं रमन्ते ॥ २३ ॥

---

१ त्वां विना । २ ताराः । ३ वाङ्मनोगोचरातीतेत्यर्थः । ४ राशिः ।

* भ्रुवोः किंकरीकृतं भ्रूविक्षेपमात्रेणैव प्रणिहितं लक्ष्मीसहस्रं यैस्ते ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

हन्तुं त्वमेव भवसि त्वदधीनमीशे ।
संसारतापमखिलं दयया पशूनाम्[1] ॥
वैकर्त्तनी[2] किरणसंहतिरेव शक्ता ।
घर्मं निजं शमयितुं निजयैव वृष्टया ॥ २४ ॥
शक्तिः[3] शरीरमधिदैवतमन्तरात्मा[4] ।
ज्ञानं[5] क्रिया[6] करणमासनजालमिच्छा ॥
ऐश्वर्यमायतनमावरणानि च त्वं ।
किं तन्न यद्भवसि देवि शशाङ्कमौलेः ॥ २५ ॥
भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा ।
विद्यानले मरुति शान्तिरतीतशान्तिः ॥
व्योम्नीति याः किल कलाः[7] कलयन्ति विश्वं ।
तासां विदूरतरमम्ब पदं[8] त्वदीयम् ॥ २६ ॥
यावत्पदं[9] पदसरोजयुगं त्वदीयं ।
नाङ्गीकरोति हृदयेषु जगच्छरण्ये ॥

१ पश्यन्ति सामान्यवत्पशवो जीवाः । २ सावित्री । आदित्याज्जायते वृष्टिरित्युक्तेः ।
३ परा चिद्रूपा शक्तिः । ४ जीवात्मा । ५ ज्ञानात्मकं मनः । ६ क्रियात्मकः प्राणः ।
७ कला नाम जगत्कर्तृस्वरूपा शक्तिर्बाहिर्मुखत्वमापन्ना अत्र तु भूम्यादिपदैर्मूलाधारादि-चक्राणि लक्ष्यन्ते । ८ चैतन्यस्वरूपम् । ९ स्थानम् ।



CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तावद्विकल्पजटिलाः कुटिलप्रकारा-।
स्तर्कग्रहाः[1] समयिनां[2] प्रलयं न यान्ति ॥ २७ ॥
यद्देवयान[3]पितृयानविहारमेके[4]।
कृत्वा मनः करणमंडलसार्वभौमम्[5] ॥
याने[6] निवेश्य तव कारणपंचकस्य[7]।
पर्वाणि[8] पार्वति नयन्ति निजासनत्वम् ॥ २८ ॥
स्थूलासु मूर्तिषु महीप्रमुखासु मूर्तेः ।
कस्याश्चनापि तव वैभवमम्ब यस्याः ॥
पत्यौ[9] गिरामपि न शक्यत एव वक्तुं ।
सापि स्तुता किल मयेति तितिक्षि[10]तव्यम्[11]॥२९॥
कालाग्निकोटिरुचिमम्ब षडध्वशुद्धा[12]-।
वाप्लावनेषु भवतीममृतौघवृष्टिम् ॥
श्यामां घनस्तनतटां सकलीकृतौ[13] च ।
ध्यायन्त एव जगतां गुरवो भवन्ति ॥ ३० ॥

---

१ दुर्बोधाः । २ मतवादिनाम् । ३ प्राणापानाभ्यामिडापिंगलयोः संचारं कृत्वा । ४ मुख्या योगिनः । ५ इन्द्रियसमूहचक्रवर्तिनम् । ६ शक्तिमार्गे । ७ शक्तेः पंचकारणासनत्वाच्छक्तिस्वरूपा भवन्तीत्यर्थः । ८ शिरांसि । ९ मध्यात् । १० ब्रह्मणापि । ११ क्षन्तव्यम् । १२ वर्णपदमंत्रतत्त्वभुवनकलाख्यषडध्वरूपदेहशोधने । १३ चिद्रसाश्यानत्वेन देहोत्पादने ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

विद्यां परां कतिचिदम्बर[1]मम्ब केचि[2]-।
दानन्दमेव कति[3]चित्कति[4]चिच्च मायाम्[5] ॥
त्वां विश्वमाहुरपरे[6] वयं[7]मामनाम ।
साक्षादपारकरुणां गुरुमूर्तिमेव ॥ ३१ ॥

कुवलयदलनीलं बर्बरस्निग्धकेशं ।
पृथुतरकुचभाराक्रान्तकान्तावलग्नम् ॥
किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं नः ।
सकलभुवनमातः सन्ततं सन्निधत्ताम् ॥ ३२ ॥

इति श्रीपञ्चस्तव्यां चतुर्थोऽम्बास्तवः समाप्तः ।

---

१ शून्यम् । २ बौद्धाः । ३ वेदान्तिनः । ४ नैयायिकाः । ५ भेदप्रथाम् । ६ चार्वाकाः ७ शाक्ताः । ८ मध्यम् । ९ संनिहितं भवतात् ।



CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

# सकलजननीस्तवः ।

ॐ अजानन्तो यान्ति क्षयमवशमन्योन्यकलहै- ।
रमी मायाग्रन्थौ तव परिलुठन्तः समयिनः ॥
जगन्मातर्जन्मज्वरभयतमःकौमुदि ! वयं ।
नमस्ते कुर्वाणाः शरणमुपयामो भगवतीम् ॥ १ ॥

वचस्तर्कागम्यस्वरसपरमानन्दविभव- ।
प्रबोधाकाराय द्युतितुलितनीलोत्पलरुचे ॥
शिवस्याराध्याय स्तनभरविनम्राय सततं ।
नमो यस्मै कस्मैचन भवतु मुग्धाय महसे ॥ २ ॥

लुठद्गुञ्जाहारस्तनभरनमन्मध्यलतिका- ।
मुदञ्चद्धर्माम्भःकणगुणितनीलोत्पलरुचम् ॥
शिवं पार्थत्राणप्रवणमृगयाकारगुणितं ।
शिवामन्वग्यान्तीं शबरमहमन्वेमि शबरीम् ॥ ३ ॥

मिथः केशाकेशिप्रधननिधनास्तर्कघटना- ।
बहुश्रद्धाभक्तिप्रणयविषयाश्चाप्तविधयः ॥

---

१ स्वस्वरूपमिति शेषः । २ परिवर्तमानाः । ३ मतभेदवादिनः । ४ संबोधनम् । ५ सूक्ष्मरूपेण । ६ स्थूलरूपेण । ७ मनोज्ञाय । ८ अवलम्बलताम् । ९ निःसरत् । १० उपशोभितम् । ११ अर्जुनरक्षातत्परेण मृगयाकारोचितेन वेषेण कृतशोभम् । १२ शरणं प्रपद्ये । १३ केशेषु केशेषु गृहीत्वा यद्युद्धं प्रवृत्तम् । १४ प्राप्तिः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

प्रसीद प्रत्यक्षीभव गिरिसुते ! देहि शरणं ।
निरालम्बं[1] चेतः परिलुठति[2] पारिप्लवमिदम्[3] ॥ ४ ॥
शुनां वा वह्नेर्वा खगपरिषदो[4] वा यदशनं ।
कदा केन क्वेति क्वचिदपि न कश्चित्कलयति[5] ॥
अमुष्मिन्विश्वासं विजहिहि[6] ममाहार्य[7] वपुषि ।
प्रपद्येथाश्चेतः सकलजननीमेव शरणम् ॥ ५ ॥
अनाद्यन्ताभेदप्रणयरसिकापि प्रणयिनी ।
शिवस्यासीर्यत्त्वं परिणयविधौ देवि ! गृहिणी ॥
संवित्री[9] भूतानामपि यदुद्भूः[10] शैलतनया ।
तदेतत्संसारप्रणयन[11]महानाटकसुखम् ॥ ६ ॥
ब्रुवन्त्येके[12] तत्त्वं भगवति ! सदन्ये[13] विदुरसत् ।
[14]परे मातः ! प्राहुस्तव सदसदन्ये सुकवयः ॥
[15]परे नैतत्सर्वं समभिदधते देवि ! सुधिय- ।
स्तदेतत्त्वन्मायाविलसितमशेषं ननु शिवे ! ॥ ७ ॥

---

१ निराश्रयम् । २ परिवर्तते । ३ चंचलम् । ४ पंक्तेः । ५ गणयति । ६ त्यज । ७ मदीयमिदं वपुरिति विश्वासम् । ८ द्रुतम् । ९ उत्पादयित्री । १० उत्पन्ना । ११ संपादनं । १२ सांख्याः । १३ बौद्धाः । १४ तार्किकाः । १५ वेदान्तिनः । न सत्तन्नासदुच्यते इति श्रुतेः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तडित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं[1] ।
प्रविष्टं स्वाधारं[2] पुनरपि[3] सुधावृष्टिवपुषा ॥
किमप्यष्टात्रिंशत्[4]किरणसकलीभूतमनिशं ।
भजे धाम श्यामं कुचभरनतं बर्बरकचम् ॥ ८ ॥
चतुष्पत्रान्तः षड्दल[5]भगपुटान्तस्त्रिवलय- ।
स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतियुते[6] ! ॥
षडश्रं[7] भित्त्वादौ दशदलम्[8] अथ द्वादशदलं[9] ।
कलाश्रं[10] च द्व्यश्रं[11] गतवति[12] ! नमस्ते गिरिसुते ॥ ९ ॥
कुलं[13] केचित्प्राहुर्वपुः[14] अकुलम्[15] अन्ये तव बुधाः ।
परे तत्सम्भेदं समभिदधते कौलम्[16] अपरे ॥
चतुर्णामप्येषामुपरि किमपि प्राहुरपरे ।
महामाये[17] ! तत्त्वं तव कथममी निश्चिनुमहे ॥ १० ॥

---

१ षट्चक्राण्येव वनम् । २ मूलाधारम् । ३ अवरोहे । ४ द्वादशकिरणप्राणसूर्यरूपेण षोडशकिरणापानसोमरूपेण दशकिरणोदानानलरूपेण । ५ षट्कोणत्रिकोणमध्ये । ६ असंख्याः । ७ षड्दलं स्वाधिष्ठानचक्रम् । ८ मणिपूरकम् । ९ अनाहतचक्रम् । १० विशुद्धिचक्रम् । ११ आज्ञाचक्रम् । १२ ब्रह्मरंध्रं प्राप्तवति । १३ षट्त्रिंशत्तत्त्वात्मकम् । १४ स्वरूपम् । १५ परमशिवरूपम् तयोः संयोगरूपम् । १६ शक्तिरूपम् । १७ विद्यातत्त्वादारभ्य शिवतत्त्वं तावद्व्याप्तिमती शक्तिर्महामाया ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

षड[1]ध्वारण्यानीं प्रलयरविकोटि[2]प्रतिरुचा ।
रुचा भस्मीकृत्य स्वपदकमलप्रह्व[3]शिरसाम् ॥
वितन्वानः शैवं किमपि वपुरिन्दीवररुचिः ।
कुचाभ्यामानम्रः शिवपु[4]रुषकारो विजयते ॥ ११ ॥
प्रकाशानन्दाभ्याम[5]विदित[6]चरीं मध्य[7]पदवीं ।
प्रविश्यैतद्द्वन्द्वं[8] रविशशिसमाख्यं केवलयन्[9] ॥
प्रविश्योर्ध्वं[10] नादं लय[11]दहनभस्मीकृतकुलः ।
प्रसादात्ते जन्तुः शिवम[12]कुलमम्ब ! प्रविशति[13] ॥ १२ ॥
प्रियङ्गुश्यामाङ्गीमरुणतरवासःकिसलयां ।
स[14]मुन्मीलन्मुक्ताफलबहुलनेपथ्यकुसुमाम् ॥
स्तनद्वन्द्वस्फारस्तबकनमितां कल्पलतिकां ।
सकृद्ध्यायन्तस्त्वां दधति शिवचिन्तामणिपदम् १३
षडा[15]धारावर्तैरपरिमितमंत्रोर्मिपटलै- ।
श्चलन्मुद्राफेनैर्बहुविधलसद्दैवत[16]झषैः ॥

---

१ वर्णादयः । २ सदृश्या । ३ नम्रम् । ४ अहमित्येवंरूपा शक्तिः । ५ चिद्विमर्शाभ्याम् । ६ ज्ञानात्पूर्वमविदिताम् । ७ सुषुम्णामार्गम् । ८ प्राणापानाख्यम् । ९ चिद्रूपे विलापयन् । १० सर्वोत्तीर्णं ब्रह्मरन्ध्रम् । ११ चिद्विश्रान्तिवह्निना विस्मारितदेहाहंभावः । १२ तत्त्वोत्तीर्णं । १३ चिद्रूपे निलीनो भवति । १४ विलसत् । १५ षडाम्नायजलभ्रमैः । १६ मत्स्यैः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

क्रमस्रोतोभिस्त्वं वहसि परं[1]नादामृतनदी ।
भवानि ! प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी ॥ १४ ॥

महीपाथो[2]वह्निश्वसनवियदा[3]त्मेन्दुरविभि- ।
र्वपुर्भि[4]र्ग्रस्तां[5]शैरपि तव कियानम्ब ! महिमा ॥
अमून्यालोक्यन्ते भगवति ! न कुत्राप्यणुतरा- ।
मवस्थां प्राप्तानि त्वयि तु परम[6]व्योमवपुषि ॥ १५ ॥

मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं ।
भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुठितम् ॥
कटाक्षश्चेदत्र क्वचन तव मातः ! करुणया ।
शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ॥ १६ ॥

कलां[7] प्रज्ञा[8]माद्यां समय[9]मनु[10]भूतिं समरसां ।
गुरुं पारम्पर्यं[11] विनयमुपदेशं शिवकथाम् ॥
प्रमाणं निर्वाणं परममतिभूतिं पर[12]गुहां ।
विधिं विद्यामाहुः सकलजननीमेव मुनयः ॥ १७ ॥

---

१ पूर्णविमर्शामृतनदी । २ जलम् । ३ यजमानः । ४ मूर्तिभिः । ५ अंशविभागरहितैः पूर्णैरित्यर्थः । ६ परमाकाशस्वरूपायाम् । ७ क्रियाशक्तिम् । ८ ज्ञानशक्तिम् । ९ सदाचारम् । १० इदमहमित्येवंरूपमनुभवम् । ११ परम्परोपदेशम् । १२ मायाख्याम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

प्रलीने शब्दौघे तदनु विरते बिन्दु[2]विभवे ।
ततस्तत्त्वे[3] चाष्टध्वनि[4]भिरनुपाधिन्युपरते ॥
श्रिते शाक्ते पर्वण्यनु[5]कलितचिन्मात्रगहनां ।
स्वसंवित्तिं योगी रसयति शिवाख्यां परतनुम् ॥ १८ ॥

परानन्दाकारां निरवधिशिवैश्वर्यवपुषं ।
निराकारज्ञानप्रकृतिमनवच्छिन्नकरुणाम् ॥
सवित्रीं भूतानां निरतिशयधामास्पदपदां ।
भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ॥ १९ ॥

जगत्का[11]ये कृत्वा तम[12]पि हृदये तच्च[13] पुरुषे ।
पुमांसं बिन्दु[14]स्थं तम[15]पि परनादाख्यगहने ॥
तदेतं[16]ज्ज्ञानाख्ये तद[17]पि परमानन्दविभवे ।
म[18]हाव्योमाकारे त्वदनुभ[19]वशीलो विजयते ॥ २० ॥

---

१ प्रत्याहारेण निवृत्ते शब्दादिविषयौघे । २ ऐन्द्रियिकज्ञानविस्तारे । ३ चिदात्मपरामर्शे । ४ अकचटतपयशाष्टकवर्गात्मकध्वनिभिः । ५ अन्तवशिष्टचिन्मात्रदुरवगाहां । ६ चमत्करोति । ७ उत्कृष्टं स्वरूपम् । ८ योनिम् । ९ उत्पादयित्रीम् । १० परमशिवस्वरूपाम् । ११ भावनया ध्यात्वा । १२ कायम् । देहसारत्वात् । १३ तच्च हृदयम् । तदाश्रयत्वात् । १४ ज्ञानाश्रयम् । १५ तं बिन्दुमपि चिद्रूपे महाशून्ये । १६ शून्यं स्वात्मपरामर्शरूपे । १७ ज्ञानं स्वात्मप्रकाशानन्दमये । १८ हे महाशून्यरूपे । १९ योगी ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

विधे विद्ये वेद्ये विविध[1]समये वेदजननि ।
विचित्रे विश्वाद्ये विनयसुलभे वेद[2]गुलिके ॥
शिवाज्ञे शीलस्थे शिवपदवदा[3]न्ये शिवनिधे ।
शिवे मातर्मह्यं त्वयि वितर भक्तिं निरुपमाम् ॥ २१ ॥
विधेर्[4]मुण्डं हृत्वा यदकुरुत पा[5]त्रं करतले ।
हरिं शूलप्रोतं यदगमयदंसाभरणताम् ॥
अलंचक्रे कण्ठं यदपि गरलेनाम्ब गिरिशः ।
शिवस्थायाः श[6]क्तेस्तदिदमखिलं ते विलसितम् ॥ २२ ॥
विरिञ्च्याख्या मातः ! सृजसि हरिसंज्ञा त्वमवसि ।
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशा[8]म् ॥
भवन्ती सादाख्या शिवयसि च पाशौ[9]घदलिनी ।
त्वमेवैकानेका भवसि कृतभेदैर्गिरिसुते ॥ २३ ॥
मुनीनां चेतोभिः प्र[10]मृदितकषायैरपि मनाग् ।
अशक्ये संस्प्रष्टुं चकि[11]तैचाकितैरम्ब सततम् ॥

---

१ नानासिद्धान्तभूते । २ चतुर्वेदसारभूते । ३ दात्रि । ४ ब्रह्मणः शिरः । ५ कपालस्वरूपम् । ६ सामर्थ्यरूपायाः । ७ ईश्वरस्वरूपम् । ८ सदाशिवरूपा शिवात्मकर्ता सम्पादयासि । ९ कलादिपाशसमूहं खण्डयित्री । १० नाशितरागद्वेषमोहैः । ११ अतिभीतैः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

श्रुतीनां[1] मूर्धानः प्रकृतिकठिनाः[2] कोमलतरे ।
कथं ते विन्दन्ते पदकिसलये पार्वति पदम् ॥ २४ ॥
तडिद्वल्लीं नित्याममृतसरितं पाररहितां ।
मलोत्तीर्णां[3] ज्योत्स्नां प्रकृतिमगुणग्रन्थिगहनाम् ॥
गिरां दूरां विद्यामविनतकुचां विश्वजननी- ।
मपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ॥ २५ ॥
शरीरं क्षित्यम्भःप्रभृतिरचितं केवलमिदं ।
सुखं दुःखं चायं कलयति पुमांश्चेतन इति ॥
स्फुटं जानानोऽपि प्रभवति न देही रहयितुं ।
शरीराहंकारं तव समयबाह्यो गिरिसुते ॥ २६ ॥
पिता माता भ्राता सुहृदनुचरः सद्म गृहिणी ।
वपुः पुत्रो मित्रं धनमपि यदा मां विजहति ॥
तदा मे भिन्दाना सपदि भयमोहान्धतमसं ।
महाज्योत्स्ने[15] मातर्भव करुणया सन्निधिकरी ॥ २७ ॥

१ उपनिषदात्मकाः । २ स्वभावतो दुर्बोधाः । ३ मलरहिताम् । ४ मायाम् । ५ गुणाः सत्त्वादयः । ६ वृद्धामित्यर्थः । ७ जडस्वरूपमित्यर्थः । ८ अनुभवति । ९ चेतनत्वादित्यर्थः । १० देहचिदात्मनोर्भेदम् । ११ त्यक्तुम् । १२ त्वदनुग्रहबहिर्भूतः । १३ परलोकोन्मुखगमनावसरे । १४ गाढध्वान्तम् । १५ चन्द्रादिज्योतिषां प्रकाशकारिणीत्वात् महाज्योत्स्नात्वम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सुता दक्षस्या[1]दौ किल सकलमातस्त्वमुद[2]भूः ।
सदोषं[3] तं हित्वा तदनु गिरिराजस्य[4] तनया ॥
अनाद्यन्ता शम्भोरपृथगपि शक्तिर्भगवती ।
विवाहाज्जाया[5]सीत्यह[6]ह चरितं वेत्ति तव कः ॥ २८ ॥
कणा[7]स्त्वद्दीप्तीनां रविशशिकृशानुप्रभृतयः ।
परं ब्रह्म क्षुद्रं[8] तव नियतमानन्दकणिका ॥
शिवादि क्षित्यन्तं त्रिवलयतनोः सर्वमुदरे[9] ।
तवास्ते भक्तस्य स्फुरसि हृदि चित्रं भगवति ॥ २९ ॥
त्वया यो जानीते[10] रचयति[11] भवत्यैव सततं ।
त्वयैवेच्छ[12]त्यम्ब ! त्वमसि निखिला यस्य[13] तनवः ॥
गतः[14] साम्यं शंभुर्वहति परमं व्योम भवती ।
तथाप्येवं हित्वा विहरति शिवस्येति किमिदम् ॥ ३० ॥

---

१ दक्षप्रजापतेः । २ समजनि । ३ सापराधम् । ४ हिमालयस्य । ५ भवसि । ६ अहहेत्याश्चर्ये । ७ लेशाः । ८ अनेन भगवत्या अतिविशालता सूचिता । ९ यस्यां सर्वं माति तस्या हृदयैकदेशे स्फुरणमत्याश्चर्यकारीत्यर्थः । १० इति ज्ञानशक्तिस्त्वमेव । ११ क्रियाशक्तिरपि त्वमेव । १२ इच्छाशक्तिरपि त्वमेव । १३ शिवस्याष्टौ मूर्तयः । १४ परमं व्योम शून्यरूपत्वं गतः प्राप्तोपि साम्यं शक्तिमत्त्वं शंभुर्वहति तथाप्येवं शिवस्य शून्यरूपत्वं हित्वोपेक्ष्य भवती शिवस्य सम्बन्धिनी शक्तिरहमिति विहरति क्रीडति इति यदभावस्य भावत्वसम्पादनं तदतीवाश्चर्यम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

पुरः पश्चादन्तर्बहिरपरिमेयं परिमितं ।
परं स्थूलं सूक्ष्मं सकुलम[1]कुलं[2] गुह्यमगुहम् ॥
दवीयो[3] नेदीयः[4] सदसदिति विश्वं भगवतीं ।
सदा पश्यन्त्याज्ञां[5] वहसि भुवनक्षोभजननीम् ॥ ३१ ॥
मयूखाः पूष्णीव[6] ज्वलन इव तद्दीप्तिकणिकाः ।
पयोधौ कल्लोलप्रतिहितमहिम्नीव पृषतः[7] ॥
उदेत्योदेत्याम्ब त्वयि सह निजैस्तात्त्विककुलै-[8] ।
र्भजन्ते तत्त्वौघाः[9] प्रशममनुकल्पं परवशाः[10] ॥ ३२ ॥
विधुर्विष्णुर्ब्रह्मा प्रकृतिरणु[11]रात्मा[12] दिनकरः ।
स्वभावो जैनेन्द्रः सुगतमुनिराकाशमनिलः ॥
शिवः शक्तिश्चेति श्रुतिविषयतां तामुपगतां ।
विकल्पैरेभिस्त्वामभिदधति सन्तो भगवतीम् ॥ ३३ ॥
प्रविश्य त्वं मार्गं[13] सहजदयया देशिक[14]दृशा ।
षडध्व[15]ध्वान्तौघच्छिदुरगणनातीतकरुणाम् ॥
परानन्दाकारां सपदि शिवयन्तीमपि[16] तनुं ।
स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम् ॥ ३४ ॥

---

१ जगत् । २ शिवः । ३ दूरम् । ४ निकटम् । ५ साक्षात्कुर्वन्ति । ६ सूर्ये । ७ बिन्दवः । ८ तत्त्वानां स्वस्वकार्यसमूहैः । ९ शिवादयः । १० त्वदधीनाः । ११ जीवः । १२ परमात्मा । १३ सुषुम्णामार्गम् । १४ गुरुवरानुग्रहदृष्ट्या । १५ भुवनाद्यध्वरूपः संसारः । १६ आनन्दयन्तीम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शिवस्त्वं शक्तिस्त्वं त्वमसि समया त्वं समयिनी ।
त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः ॥
अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं ।
पृथक्तत्त्वं त्वत्तो भगवति न वीक्षामह इमे ॥ ३५ ॥
असंख्यैः प्राचीनैर्जननि जननैः कर्म[1]विलया-।
द्द्गते जन्मन्यन्तं गुरुवपुष[2]मासाद्य गिरिशम् ॥
अवाप्याज्ञां शैवीं कृमतनुरपि त्वां विदितवान् ।
[3]नयेयं त्वत्पूजास्तुतिविरचनेनैव दिवसान् ॥ ३६ ॥
यत्षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या ।
योनिस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम् ॥
तस्मिन्नन्तः कुचभरनतां कुण्डलीतः प्रवृत्तां ।
श्यामाकारां सकलजननीं सन्ततं भावयामि ॥ ३७ ॥
भुवि पयसि कृशानौ मारुते खे शशाङ्के ।
सवितरि यजमानेऽप्यष्टधा शक्तिरेका ॥
वहति कुचभराभ्यां या विनम्रापि विश्वं ।
सकलजननि सा त्वं पाहि मामित्यवश्यम् ॥ ३८ ॥

इति श्रीपंचस्तव्यां सकलजननीस्तवः पंचमः ।

समाप्ता चेयं पञ्चस्तवी ।

---

१ कर्मलोपात् । २ गुरुस्वरूपम् । ३ अतिवाहयेयम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

# श्रीविष्णुस्तुतिः ।

ॐ शंखचक्रगदापद्मधारिणे वनमालिने ॥ भक्तानां परमानन्दकारिणे विष्णवे नमः ॥ १ ॥ बर्हावतंसिने वन्यपुष्पमालाविभूषिणे ॥ नमोऽस्तु राधया सार्धं कालिन्दीकुञ्जचारिणे ॥ ॥ २ ॥ नन्दस्यानन्दकन्दाय किंकिणीमंजुलाय च ॥ यशोदापरमानन्ददायिने वंशिने नमः ॥ ३ ॥ गोपीखेलनलीलाय कृष्णाय मुक्तिदायिने ॥ नमः प्रपन्नसौभाग्यकारिणे कंसहारिणे ॥ ४ ॥ स्मृत्यैवेष्टप्रदानेन स्वस्तरोर्गर्वहारिणे ॥ रुक्मिणीरागिणे वृष्णिवंशोत्तंसाय ते नमः ॥ ५ ॥ लसत्कुण्डलगण्डाय श्यामसुन्दरमूर्तये ॥ मुरलीनादपीयूषगोपीहर्षकृते नमः ॥ ६ ॥ खेलायां कन्दुकेऽदृश्ये जाते राधास्तनं मुहुः ॥ यशोदां याचमानाय नमो राधाविलासिने ॥ ७ ॥ भवाब्धिमग्नपोताय भवान्धुभ्रष्टरज्जवे ॥ भवदावसुधानभवृष्टये ते प्रभो नमः ॥ ८ ॥ हा नाथ हा जगन्नाथ हा कृष्णाशोकनाशन ॥ हा कुन्तीपुत्रभीतिघ्न मामुद्धर भवाब्धितः ॥ ९ ॥ मुक्त्वैकस्मात्प्रभो पाशात्पाशान्तरानियंत्रितः ॥ गाढपंक इव भ्रष्टः कदा नु मुक्तिमाप्नुयाम् ॥ १० ॥ यद्राधिकायाः कुचकुंकुमार्द्रं यत्कालिन्दिशीकाभयदानदक्षम् ॥ यत्क्रूरकंसाय च धूमकेतुं तत्कृष्णपत्पंकजमाश्रयेऽहम् ॥ ११ ॥ पाषाणभूतां मुनियोषितं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तां यत्स्पर्शनादुद्धरति स्म सद्यः ॥ संसारमग्नोद्धरणावलम्बं तन्नामपत्पंकजमाश्रयेऽहम् ॥ १२ ॥ पंफुल्यते यच्छ्रवणेन चित्तं लोलुप्यते यन्मननेन पापम् ॥ रंरम्यते ध्यानपरश्च यत्र तद्विष्णुपत्पंकजमाश्रयेऽहम् ॥ १३ ॥ वर्वर्ति विश्वस्य विधौ यतः कस्तातर्ति दुष्टोऽपि यतो भवाब्धिम् ॥ पापर्ति यत्त्रीणि जगन्ति विष्णोर्बोभोतु भद्राय तदंघ्रिपद्मम् ॥ १४ ॥ गोवर्धने गोकुलचारणेन श्रान्तं त्वदीयं चरणारविन्दम् ॥ विश्रान्तयेऽतः क्षणमेव मे हृच्छय्यां समध्यास्व विभो कृती स्याम् ॥ १५ ॥ सामान्यतां याति निषादजातेर्विप्रोऽपि सर्वोक्तगुणो विना याम् ॥ सा त्वत्पदाब्जानुगता प्रभो मे चिद्वृत्तिभृङ्गीसुखदाऽस्तु भक्तिः ॥ १६ ॥ सत्यं भवत्पादनिषेवणोत्थं हर्षामृतं सर्वरसोत्तमाढ्यम् ॥ प्राप्तामृता अप्यमरा यदर्थे स्वामिन्सदा जाग्रति भक्तिनम्राः ॥ १७ ॥ ध्वान्तापहाराय जनो विधत्तां वाञ्छां प्रकाशस्य विशुद्धजातेः ॥ बाह्यान्तरध्वान्तहरा हरेर्मे श्यामैव चित्तेऽस्तु हि कृष्णमूर्तिः ॥ १८ ॥ उद्धृत्य गोवर्धनपर्वतं यो गोगोपसंघं परितो ररक्ष ॥ तस्य प्रभो ! तेऽधमभक्तरक्षा दृष्ट्यैकसाध्या किमु हा प्रयासः ॥ १९ ॥ विश्वम्भरत्वेऽपि विभो न मे यद्वृत्तिं ददासीश्वर नात्र दूये ॥ दूये परं त्वच्छुभनामधे-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यानर्थत्वयोगे महतां विनिन्द्ये ॥२०॥ आपन्नभीताशनिपंज-
रस्य कंसादिशत्रो ! तव पश्यतोऽपि ॥ लोभादयो मां सततं
द्विषन्ति तान्प्रत्युपेक्षा च महद्विगर्ह्या ॥ २१ ॥ दुर्भाग्यदुष्की-
र्तिकलंकहारिन्मां मन्दभाग्यं सहसा विलोक्य ॥ हा ते कथं
भव्यशिवाभिधाया जातः समासः सह नञ्पदेन ॥ २२ ॥
आदित्यचन्द्रेक्षण ! सूर्यकोटिन्यक्कारि रूपं तव दिव्यधामन् ॥
भावत्कभानेन विभाति विश्वं हार्दं तमो मे न कुतो निहंसि ॥२३॥
भ्रष्टस्तमोगर्त इहाच्युताहं दष्टस्तथा कालमहाहिना च ॥ सूर्येन्दु-
वह्न्यादिविभासकस्त्वमेह्येहि संरक्ष खगेन्द्रगामिन् ॥ २४ ॥
दुर्भेद्यदुःसाध्यदुरन्तदुःखात्कूर्मस्य पाशात्त्वरया द्विपेन्द्रम् ॥
उन्मोच्य चारुन्तुदकर्मपाशैर्बद्धं प्रभो मां किमुपेक्षसेऽद्य ॥ २५॥
भ्रान्त्वा वनं कण्टकरुद्धमार्गं सन्तार्य हर्षाच्छबरीगुहादीन् ॥
द्वारे लुठन्तं स्वयमागतं च स्वामिन्वराकं किमुपेक्षसे माम्
॥ २६ ॥ जानीहि पुत्रं पवनस्य जीनं मन्मानसं चातिबलं
युवानम् ॥ गत्या जयन्तं पवनं प्रभो तत्संपादयैनं स्वपदाब्ज-
भृत्यम् ॥ २७ ॥ व्याप्नोति विश्वं परितश्च विष्णुरित्याहुरेके
विदितैकतत्त्वाः ॥ स्वान्ते कदाचिद्व्यपि मे तदा त्वं भोद्भासि
किं नैव विभो विभास्वन् ॥ २८ ॥ शून्यामयोध्यां कृतवान्भ-


CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वान्वै नीत्वान्त्यजांश्चापि निजं पदं तान् ॥ आश्चर्यमेतद्धि
विभोऽवकाशो न स्याद्धन्यस्य यतो विलम्बः ॥ २९ ॥
तीव्रार्तिनिस्तारणकारणस्त्वं द्राक् चेत्समागत्य न मां दयेथाः॥
दीनान्तरार्तिप्रशमप्रतिज्ञा व्यर्था भवेत्तद्भगवन्न युक्तम् ॥ ३० ॥
भामेष्टपूर्त्यै भुवि नाकवृक्षं प्रारोपयो यत्नत एव कृष्ण ॥ त्वद्द-
र्शनायैव महास्पृहा मद्बुद्धेर्भरस्तत्र च ते प्रभो कः ॥ ३१ ॥
ज्ञात्वा शठं दुष्कृतिनं च दुष्टं चेन्मन्यसे मामवलेपभूमिम् ॥ स्वा-
मिंस्तदा त्वत्करुणामृतस्य पात्रं भवेत्को नु कृपार्द्रबुद्धे ! ॥३२॥
त्वन्नामसंकीर्तनजातप्रहर्षान्नेत्राम्बुसंसिक्तकपोलदेशः ॥ प्रस्वि-
न्नगात्रश्च विभो भवेयं भावत्करूपस्फुरणात्कदा नु ॥ ३३ ॥ ज्ञा-
त्वापि संसारसुखं विनाशि दुःखानुषक्तं च विपाकदुःखम् ॥
हा हा मनागप्यतितापनाशिन्मच्चित्ततोऽपैति न कृष्ण तृष्णा।
॥ ३४ ॥ पापे प्रसक्तं सुकृतेष्वसक्तं मोहान्धकारे पतितं च
भीतम् ॥ मामुद्धर द्राक् शरणागतं त्वं विश्वासय स्वीयकराव-
लम्बात् ॥ ३५ ॥ धाम्नः परस्मादवतीर्य मायां धृत्वा च हित्वा
प्रणयित्वदैन्यम् ॥ क्रान्त्वा त्रिभिश्चैव पदैस्त्रिलोकीं तत्रे स्वभ-
क्तान्स हरिर्गतिर्मे ॥ ३६ ॥ दुर्भेद्यसांसारिकपाशभेत्री दुर्लङ्घ्य-
दुःखाम्बुधितारिणी च ॥ दुष्प्रापसारूप्यकरी हरे ! मेऽनाथस्य

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

चित्तेऽस्तु भवत्सुमूर्तिः ॥ ३७ ॥ रुन्धि द्विषां द्वेषयुताः कुदृष्टी-
र्भिन्ध्यापदश्छिन्धि विभो कुसंगान् ॥ अन्तर्व्यथां पिण्ढि च तृ-
ण्ढि शत्रून्दन्दग्धि दोषांश्च दयस्व तूर्णम् ॥ ३८॥ शरण्य चेन्न
स्वकृपानुरूपं विधास्यसि त्वं प्रतिभक्तलोकम् ॥ तथापि मा-
माग्रहिलं त्वदर्थे क्रुधेव के ताडय पादघातैः ॥ ३९ ॥ भवाख्य-
रङ्गे भवदीयशासनात्प्रविश्य कार्यं न वरं मया कृतम् ॥ अतः
प्रभो क्रुद्धतयैव मामितः करेण धृत्वा सहसापसारय ॥ ४० ॥
त्रितापशान्त्यै चरणाग्रभागात्त्रिमार्गगा ते निरगात्त्रिलोक्याम् ॥
त्रिलोकसंतापहराब्धिशायिन्मच्चित्ततापं न कुतो निहंसि
॥ ४१ ॥ भाग्योदयाच्चेन्मम चित्तभृङ्गः कदापि यायात्तव
पादपद्मे ॥ प्रभो तदेन्द्वर्कविलोचनाशु वामेक्षणेनैव विलोकयै-
नम् ॥ ४२ ॥ दुष्पारसंसारसमुद्रतारणे कैवर्तकस्त्वं किल
विश्वविश्रुतः ॥ अज्ञानकल्लोलसहस्रसंकुलां नावं मदीयामपि
कृष्ण ! तारय ॥ ४३ ॥ तृष्णाविहीना अपि यत्पिपासिता
देवर्षिवन्द्या अपि यत्स्तुतौ रताः ॥ सर्वार्चिता श्रीरपि यत्स-
मर्चति तत्पादपद्मं हृदि मेऽस्त्वलं प्रभोः ॥ ४४ ॥ हा हा
हतोऽस्मि करुणाकर कृष्णचन्द्र चिन्ताचिताहुतभुजास्मि स-
जीवदग्धः ॥ सा च त्वरा तव विभो क नु नाम याता या

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

द्रौपदीबहुलभीतिविनाशदक्षा ॥ ४५ ॥ रंकः समग्रमिव शेव-धिमाप्य कृष्ण त्वत्पादपद्मयुगलं भवतापहर्तृ ॥ स्वप्स्ये कदा नु परिरभ्य चिरं सुखेन ब्रह्मादिभिः सुरवरैरपि दुर्लभेण ॥ ४६ ॥ तानर्जुनप्रभृतिभक्तगणान्निपुभ्यस्त्रात्वा यमेभ्य इव घोरभयाव-हेभ्यः ॥ हा मत्कृते किमु समेक्षण ! निद्रितोऽसि किं नूचिता त्वयि विभो नमतामुपेक्षा ॥ ४७ ॥ वासुदेव वसुदेवदेवकी-बन्धनार्तिहरणेऽभवः सुतः ॥ स्वामिभावमपि मध्यनाथके नाथ किं न वरितुं प्रसीदसि ॥ ४८ ॥ सेवते कमपि कोऽपि नो विना वेतनं यदि तथाप्यहं प्रभो ॥ प्रार्थये च भवदंघ्रिसेवनं तं विनैव तव कात्र नु क्षतिः ॥ ४९ ॥ जयतु भोः प्रभो ! तेऽङ्घ्रिपंकजं हृदयहर्षदं धत्तातृमंगलम् ॥ वसतु मे मनोमन्दिरे सदा भवतु विश्वतो गाढमोहहृत ॥ ५० ॥ हृदयहर्षकरैर्मधु-रस्वरैः प्रियजनान्मदयन्मुरलीरवैः ॥ दुरितदुःखहरः करुणा-करो दिशतु मेऽभिमतं परमेश्वरः ॥ ५१ ॥ प्रसीद भगवन्हरे हर हृद्य्यदुःखानि मे निधेहि पदपंकजं शिरसि तापतप्तस्य मे ॥ कृपाभरितदृष्टिभिः स्नपय भोः कृपाम्भोनिधे तथा कुरु यथा पुनर्न च भजे भवाध्वश्रमम् ॥ ५२ ॥ मायायाः प्रतिमां प्रियां जनकजां मायाविमायाहृतां यत्नाद्वारिधिपारमेत्य भगव-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

न्यस्यानयः प्रेमतः ॥ एतां चापि मदीयमानसगतां मायां मया
भक्तितो मायेशोपहृतां कुतो न कृपया गृह्णास्यनुग्रह्य माम्
॥ ५३ ॥ मादृशानामनाथानां त्रिलोकीनाथ भीतिहन् ॥ को
गतिस्त्वां विना कृष्ण रक्ष मां करुणानिधे ॥ ५४ ॥ कलङ्क-
कुत्साकलितं खलं माऽनाथं नृशंसं कृपणं कृपालो ॥ राम
स्वपादाब्जयुगानुरक्तं शास्त्रीयधर्मे च रतं कुरुष्व ॥ ५५ ॥

इति श्रीविष्णुस्तुतिः समाप्ताऽनाथक्षेमाय भवतु ।



CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

# श्रीराज्ञीस्तुतिः ।

ॐ संसारसागरमहं तरितुं सुनौकां राज्ञीं नमामि शिरसा शिवसुन्दरीं त्वाम् ॥ सर्वेश्वरीं सकललोकसुखप्रदात्रीं त्वामेव देवि सततं शरणं प्रपद्ये ॥ १ ॥ मातः पयोधरयुगं पिबतु त्वदीयं नागाननर्तुमुखवत्सलपुत्रयुग्मम् ॥ निर्णेजनाम्बुन इह स्पृहयाम्यहं तु त्वत्पादपद्मयुगलस्य भवाग्निशान्त्यै ॥ २ ॥ मातस्त्वदीयपरितोषविशेषलब्धे छत्रे प्रहृष्यतु सदा भगवान्सुरेन्द्रः ॥ पीयूषवर्षणकरात्तव देवि पादच्छत्राद्विना किमपि राज्ञि न नाम याचे ॥ ३ ॥ मोहाटवीविकटसंकटपीडितोऽहं राज्ञि प्रपन्नपरमार्तिहरा त्वमेका ॥ जाज्वल्यतेऽम्ब हृदयार्तिकरो ममान्तः पापाग्निरेशि शमयैनममास्वरूपे ॥ ४ ॥ आरारटीमि करुणं भवतापतप्तः प्रोल्लालपीमि पतितो भवदुःखसिन्धौ ॥ मोमोर्मि राज्ञि लुठितो भवसर्पदष्टस्त्वामन्तरेण शरणं मम कः शरण्ये ॥ ५ ॥ राज्ञि प्रपन्नवरदे सुकृतादपर्णां त्वामाश्रितोऽस्मि सुचिरात्तु महद्विचित्रम् ॥ किं नास्मि भैरवि ऋणैस्त्रिविधैर्विमुक्तः पाशैरिवोत्कटविषात्कभुजङ्गमानाम् ॥ ६ ॥ राज्ञि प्रसीद नतसौख्यकरे मृडानि रुद्राणि रोगहरणे चतुरे प्रसीद ॥ शर्वाणि सर्वजनपापहरे प्रसीद गौरि प्रसीद गुणगौरि शिवे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

प्रसीद ॥ ७ ॥ कल्याणि राज्ञि जगदीश्वरि विश्वमातस्त्वाम-
न्तरेण नहि देवि सुखं जनस्य ॥ पुत्रस्य दुःखहरणे सततो-
द्यता द्राक् मातैव हि स्नुतकुचा नु भवत्यवश्यम् ॥ ८ ॥
राज्ञ्यष्टकमिदं पुण्यं यः पठेद्धर्षपूरितः ॥ सोऽत्र द्राक् प्राप्नुया-
त्कामान्परलोके च स्वर्गतिम् ॥ ९ ॥

इति श्रीराज्ञीस्तुतिः समाप्ताऽनाथक्षेमाय भवतु ॥

---



CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

# श्रीराज्ञीस्तोत्रम्।

ॐ ॐकाररूपेऽखिलवेदसारे वेदान्तविज्ञानचणैः प्रगीते ॥
मूर्ध्ना महाराज्ञि महार्हपीठे वन्दे त्वदीयं चरणारविन्दम् ॥ १ ॥
भूरादिलोके कृतलक्षणेऽजे राज्ञि प्रपन्नार्तिहरे नमस्ते ॥ आक्र-
न्दमाकर्णय मे शरण्ये भक्तार्तिनाशे ह्यपरः प्रभुः कः ॥ २ ॥
भुवोऽवकाशे रविचन्द्रदीप्तैर्देदीप्यते त्वामनु चित्प्रदीप्तिम् ॥
तमःप्रपञ्चं प्रविलाप्य हार्दं पद्मं ममाबोधय राज्ञि मातः ॥ ३ ॥
स्वःशाखिदर्पं हरतीष्टदानादाशाधिकाद्यत्स्मृतमात्रमेव ॥ मातर्म-
हाराज्ञि तदाननं ते वन्दे शरत्सुन्दरचन्द्ररम्यम् ॥ ४ ॥ तद्वा-
ङ्मनोदूरमचिन्तनीयं रूपं स्वकीयं भवदुःखहारि ॥ पीयूषपी-
यूषमयूखतुल्यं राज्ञि प्रकाश्याम्ब कदा दयेथाः ॥ ५ ॥ सवितुः
शक्तिभूता त्वं सूयसेऽदश्चराचरम् ॥ नमोऽस्तु ते महाराज्ञि पाहि
मां शरणागतम् ॥ ६ ॥ वरेण्यं त्वत्पदाभ्यर्चामृतचर्वणमस्तु
मे ॥ नमो० ॥ ७ ॥ भर्गो भर्गेऽपि संसारभर्जको यस्तवैव सः ॥
नमो० ॥ ८ ॥ देवस्य त्रिपुरारातेराहोपुरुषिके शिवे ॥
नमो० ॥ ९ ॥ धीमहिम्नापि केनापि यां स्तोतुं न प्रभूयते ॥
नमो० ॥ १० ॥ धियो मे घोरसंसारलंघने सन्तु सज्जिताः ॥
नमो० ॥ ११ ॥ योऽर्चति त्वां स देवेशि मघवादिभिरर्च्यते ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नमो० ॥ १२ ॥ नास्तितोष्ट्रवदम्बाहं कर्मपाशैः प्रपीडितः ॥
नमो० ॥ १३ ॥ प्रचोदयात्तवेच्छा मां तवैवाङ्घ्रिनिषेवणे ॥
नमो० ॥ १४ ॥ राज्ञीस्तोत्रमिदं पुण्यं यः पठेद्भक्तिसंयुतः ॥
तस्य सिध्यति सर्वेष्टमचिराद्देवदुर्लभम् ॥ १५ ॥

इति द्वितीयं श्रीराज्ञीस्तोत्रं समाप्तमनाथक्षेमाय भवतु ।

---

मातुः स्नेहः सर्वपुत्रेषु तुल्यः श्लाघ्याश्लाघ्येष्वम्ब चेतस्यमेतत् ॥ दुर्वृत्तस्याप्यात्मजस्यास्ति किं मे त्यागो युक्तस्तर्हि दोषौघहर्त्रि ॥



CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

# श्रीशारिकास्तोत्रम् ।

ॐ अष्टादशैरसिगदादियुतैर्भुजैर्या त्रातुं समस्तभुवनानि विपद्भयेभ्यः ॥ जागर्त्यशेषजनदुःखहरा परा सा श्रीशारिका दिशतु मङ्गलसन्ततिं नः ॥ १ ॥ उद्यत्सहस्ररविभास्वरदीप्तिदीप्तां सिंहासनां शशिकलाभरणां त्रिनेत्राम् ॥ यां चिन्तयन्ति बहुभक्तिरसार्द्रचित्ताः श्रीशारिका० ॥ २ ॥ यत्पादयोः सकृदपीह कृतार्चनो ना भक्त्यान्वितो ह्यनुभवत्यमरप्रभुत्वम् ॥ श्रीराजराजसखिसौख्यनिवासभूमिः श्रीशारिका० ॥ ३ ॥ सौदामनीप्रमदमत्तगजेन्द्रकर्णस्थित्या समापि भजते स्थिरतां विभूतिः ॥ यत्पादपङ्कजयुगाश्रयणात्सदा सा श्रीशारिका० ॥ ४ ॥ यत्कीर्तनश्रवणसंमननोत्थपुण्यं शक्नोति नो गणयितुं बहुधाप्यनन्तः ॥ साऽशेषरोगदलनाय धृतौषधीशा श्रीशारिका० ॥ ५ ॥ श्रीमातृकाभिरुपसेवितपादधूल्या प्रद्युम्नपीठसमवस्थितया ययेश्या ॥ कश्मीरदेशजनता परिपाल्यते सा श्रीशारिका० ॥ ६ ॥ यस्याः प्रदक्षिणपरिक्रमणात्सुभक्त्या पापोऽप्यलंघ्यभवसागरपारमेति ॥ सा शोकमोहपरितापविपत्तिहर्त्री श्रीशारिका० ॥ ७ ॥ मूलालवालमणिपूरकनाभिपद्महृत्कण्ठशिष्टिमतिवाह्य करन्ध्रमेत्य ॥ या मोदते सह शिवेन सहस्रपत्रे श्रीशारिका० ॥ ८ ॥ यस्या अनाहतनिनादसुधारसेन

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ज्ञातः परात्परसुखानुभवात्प्रहृष्टः ॥ जीवंश्च मुक्त इव भाति
नरोत्तमः सा श्रीशारिका० ॥ ९ ॥ यद्देहसंगतिरसेन सुधापरा-
र्धधिक्कारकेण विषधारणशक्तियुक्तः ॥ श्रीनीलकण्ठ इति की-
र्तिमवाप शंभुः श्रीशारिका दिशतु मंगलसंततिं नः ॥ १० ॥
अमे सुरेशि योगीन्द्रामृतपायनतत्परे ॥ श्रीशारिके नमस्तेऽस्तु
पाहि मां शरणागतम् ॥ ११ ॥ कामे कामितकामानां पूरणे
पूर्णताप्रदे ॥ श्रीशारिके० ॥ १२ ॥ चार्वङ्गि कोटिकन्दर्पलाव-
ण्ये विश्वमोहिनि ॥ श्रीशारिके० ॥ १३ ॥ टङ्कधारिणि शत्रू-
णां तिलशो देहखण्डिनि ॥ श्रीशारिके० ॥ १४ ॥ तारे निस-
र्गगम्भीरभवसागरतारिणि ॥ श्रीशारिके० ॥ १५ ॥ पार्वति
त्रिजगन्मातर्हिमवद्वंशपावने ॥ श्रीशारिके० ॥ १६ ॥ यक्षि-
णीष्टाष्टसिद्धीनां दायिनि देवपूजिते ॥ श्रीशारिके० ॥ १७ ॥
सत्त्वादिशबलेऽनन्तब्रह्माण्डजननीश्वरि ॥ श्रीशारिके० ॥ १८ ॥
कलानिधिकलाकान्तकिरीटकुण्डलोज्वले ॥ श्रीशारिके० ॥
॥ १९ ॥ श्रीशारिका जगन्माताऽनाथनाथा सुरेश्वरी ॥ प्रीयतां
पादयोरेतत्स्तोत्रपुष्पसमर्पणात् ॥ २० ॥

इति श्रीशारिकास्तोत्रं समाप्तम् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

# श्रीज्वालामुखीस्तोत्रम्।

ॐ जाज्वल्यमानवपुषा दशदिग्विभागान्सन्दीपयन्त्यभयपद्मगदावराढ्या॥ सिंहस्थिता शशिकलाभरणा त्रिनेत्रा ज्वालामुखी हरतु मोहतमः सदा नः॥ १॥ आब्रह्मकीटजननीं महिषीं शिवस्य मुग्धस्मितां प्रलयकोटिरविप्रकाशाम्॥ ज्वालामुखीं कनककुण्डलशोभितांसां वन्दे पुनः पुनरपीह सहस्रकृत्वः॥ २॥ देदीप्यमानमुकुटद्युतिभिश्च देवैर्दासैरिव द्विगुणितांघ्रिनखप्रदीप्तिम्॥ ज्वालामुखीं सकलमङ्गलमङ्गलां तामम्बां नतोऽस्म्यखिलदुःखविपत्तिदग्ध्रीम्॥ ३॥ क्षित्यम्बुहुताशपवनाम्बरसूर्यचन्द्रयष्ट्राख्यमूर्तिममलानपि पावयन्तीम्॥ ज्वालामुखीं प्रणतकल्पलतां शिवस्य साम्राज्यशक्तिमतुलां महतीं नमामि॥ ४॥ नौमीश्वरीं त्रिजगतोऽभयदानशौण्डां ज्वालामहार्यभवजालहरां नमामि॥ मोहान्धकारहरणे विमलेन्दुकान्ति देवीं सदा भगवतीं मनसा स्मरामि॥ ५॥ दुष्कर्मवायुभिरितस्ततत एव दीप्तैः पापज्वलज्ज्वलनजातशिखाकलापैः॥ दग्धं च जीवयतु मां परितो लुठन्तं देवी दयार्द्रहृदयामृतपूर्णदृष्ट्या॥६॥ ज्वालामुखी ज्वलदनल्पलयाग्निकोटिरोचिष्मती रविशशिप्रतिभानकर्त्री॥ भक्तस्य भर्गवपुषा भवभर्जनाय भूयात्सदाभ्युद-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यद्दानवदान्यमुख्या ॥ ७ ॥ त्वं चौषधीशमुकुटाऽहमसाध्य-
रोगस्त्वं चित्प्रदीप्तिरहमत्र भवांध्यमग्नः ॥ त्वं चाम्ब ! कल्प-
तरुरेवमहं च भिक्षुर्ज्वालामुखि प्रकुरु देवि यथोचितं मे ॥ ८ ॥
यद्ध्यानकेसरिसमाक्रमणोत्थभीतेर्मर्मव्यथाजनकदुःखशतानि
सद्यः ॥ गोमायवन्ति परितो भृशकान्दिशीकानस्मांश्च पालयतु
सैव भवाब्धिदुःखात् ॥ ९ ॥ ज्वालामुखि क्षणमपीह विलम्ब-
मम्ब नार्तो ह्यनर्थपतितः सहते विपन्नः ॥ हस्तस्थितामृतकम-
ण्डलुवारिणैव मां मूर्च्छितं झटिति जीवय तापतप्तम् ॥ १० ॥
बाह्यान्ध्यनाशनविधौ रविचन्द्रवह्निज्योतींषि देवि दययाऽज-
नयः पुरा त्वम् ॥ एतत्तु रूपमखिलान्तरमोहरात्रिध्वान्ता-
न्तकारि तव यत्स्फुरतादतोऽन्तः ॥ ११ ॥ मन्ये त्रिधा-
मनयने नयनत्रयं ते भक्तार्तिनाशननिमित्तविलोकनाय ॥
मातः परं यदपि देवि तथाप्यऽधन्यस्त्वद्दृष्टिपातरहितोऽस्म्यहहा
हतोऽस्मि ॥ १२ ॥ सत्यं ब्रवीमि शृणु चित्त मदान्ध मूर्ख मा
गाः कदापि विषयान्विषमान्विषाक्तान् ॥ ईशीमपारकरुणां
भवभीतिभेत्त्रीमम्बां भजस्व सततं परसौख्यदात्रीम् ॥ १३ ॥
त्वं मे महेशि जननी मरमार्तिहर्त्री त्वं मे पिता हिततमस्त्वमहे-
तुबंधुः ॥ त्वं मे भवाब्धितरणे दृढनौरत्वमेव दुःखामयाधिहरणे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

चतुरश्च वैद्यः ॥ १४ ॥ ज्वालां जगज्जननसंहरणस्थितीनां हेतुं गतिं मुषितलज्जितदुःखितानाम् ॥ उन्मोचनां च भवबंधनदुर्गतीनां त्वां नौमि नौमि शरणं शरणागतानाम् ॥ १५ ॥ ज्वालामुखीस्तवमिमं शृणुयात्पठेद्वा यः श्रद्धया परमया बहु भक्तियुक्तः ॥ भूयात्स दग्धबहुजन्मशतार्जिताऽघोऽनाथोऽप्यनेकजननाथितराज्यसंपत् ॥ १६ ॥

इति श्रीज्वालामुखीस्तोत्रं समाप्तम् ।



CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

